श्रीहेमचन्द्राचार्यग्रन्थावली नं०

आचार्यवर्यश्रीमद्-हारिभद्रसूरिविरचितो

# अनेकान्तवादप्रवेशः

सटिप्पनकः

पारेखान्वयजातेनव्हेचरात्मजप्रभुदासेन
संशोधितः

श्रीमत्पन्न्यासश्रीनीतिविजयमहाराजसमुपदिष्ट-
'संघवी-पानाचन्द मोतीचन्द' इत्येतस्य च
द्रव्यसहायेन

पट्टनस्थश्रीहेमचन्द्राचार्यसभायाः सेक्रेटरी-
शाह-लहेरुचन्द भोगीलालेन
प्रकाशितः

वीर संवत् २४४६ — विक्रम संवत् १९७६

ता. १-१२-१९.

प्रथमावृत्ति — प्रतयः ५००.

अणहिल्लपत्तनम्

मूल्यमाणक पञ्चकम्

श्रीहेमकुमारजैनमुद्रणयन्त्रालये
संघपत्यन्वयेजातेन त्रिभुवनदासात्मजचन्दुलालेन
प्रकाशकक्ते मुद्रितम्

ता. १-१२-१९. — पत्तनम् [उ. गु.]

# ॥ प्रास्ताविकम् ॥

इदं प्रकरणं परमकृपालुश्रीमदाचार्यवर्यश्रीहरिभद्रसूरिभिः स्वयं विनिर्मितानेकान्तजयपताके शब्दार्थगभीरग्रंथमहार्णवेऽवगाहितुमशक्तानां जिज्ञासूनां प्रतनुपोततुल्यं विनिर्मितम्—इति तु सुनिश्चितं विपश्चिताम्। सटिप्पनकं शोधितं मुद्रितमस्माभिः। टिप्पनकस्य के नाम चार्यवर्या निर्मातारः? इति नैवाहं सम्यग्जानामि। जानन्ते ये केचिद् महाशयाः, तेभ्योऽवगच्छन्तु जिज्ञासवः।

श्रीमद्हरिभद्रसूरीणां सत्तासमयः विक्रमीयशतकं षष्ठम्। ये **तूपमिति-भवप्रपञ्च**कथोपसंहारे विन्यस्तानि **श्रीसिद्धर्षिसूरिभिः** पद्यानि विलोक्य नवमे शतके सत्तां व्यवस्थापयितुं संशंसन्ते, तैर्विलोक्या **श्रीमदिन्द्र**दिन्नसूरीणां **कुवलयमाला**कथापीठिका, यतः—ते संजाताः सप्तमे शतके, स्वमुखेनैव स्वसत्तासमयः समरादित्यचरित्रप्रशंसा च कृता।

श्रीमद्हरिभद्रसूरिभिरनेकग्रन्था विनिर्मिताः, तेषां-उपलब्ध-संभावित-मुद्रितानां सामान्यतः टीप्पनकमस्ति मत्पार्श्वे, किंतु-विस्तारभयान्न वितन्यते इह प्रसङ्गमुपलभ्योपलोकयिष्ये कदाचिद्।

श्रीमदानन्दसागरसूरिभिर्वितीर्णितेन एकेनैव पुस्तकेन संशोधितं पुस्तकमिदम्। तेषां सूरिवराणामुपकारं स्मरामि, शोधनमुद्रणदोषाणां च क्षमां याचे विद्वद्भ्यः।

**पाटण** विदुषामनुचरः

क्षेत्रपालपाटके **प्रभुदासः**

अर्हँ ।

श्री-

हरिभद्रसूरिविरचित-

# अनेकान्तवादप्रवेशः

## टिप्पनसहितः ।

---

जयति विनिर्जितरागः सर्वज्ञस्त्रिदशनाथकृतपूजः ।
सद्भूतवस्तुवादी शिवगतिनाथो महावीरः ॥ १ ॥

इह केचिदनादिकर्मवासनोद्भूतमहामोहाकुलीकृतचेतसो यथास्थितं सदसन्नित्यानित्याद्यनेकरूपं वस्त्वनुभवन्तोऽपि न प्रतिपद्यन्ते; प्रत्यवतिष्ठन्ते च—कथमेकमेव घटादि[1]रूपं वस्तु सच्चासच्च भवति ? तथाहि—सत्त्वमसत्त्व[2]परिहारेण व्यवस्थितम्, असत्त्वमपि सत्त्वपरिहारेण, अन्यथा तयोरविशेषात्[3]; ततश्च तद्यदि सत्, कथमसत् ? अथासद्, कथं सत् ? इत्येकत्र सदसत्त्वयोर्विरोधात् । तथा चोक्तम्—

यस्मात्सत्त्वमसत्त्वं च विरुद्धं हि[5] मिथो द्वयम् ।
वस्त्वेकं सदसद्रूपं तस्मात् खलु न युज्यते ॥ १ ॥

किं च;—सदसद्रूपं वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तुधर्मतयाभ्युपगतं भवति । ततश्चात्रापि वक्तव्यम्; धर्मधर्मिणोः किं तावद्भेदः ? आहोश्विदभेदः ? आहोश्विद्भेदाभेदः ? इति । तत्र यदि तावद्भेदः, ततः सदसत्त्वयोर्भिन्नत्वात्[6]

---

१. आदिशब्दाज्ज्ञानादि । २. अर्थक्रियासमर्थं च सद्, अन्यदसदुच्यते ।
समावेशो न चैकत्र तयोः प्रोक्तो विरोधतः ॥ १ ॥
३. असत्त्वानापत्त्या । ४. अभेदात् । ५ एवकारार्थं । ६. धर्मिणः सकाशात् ।

कथमेकं[1] सदसद्रूपम् ? इति । अथाभेदः[2], ततः सदसत्त्वयो[3]रेकत्वम्[4], एकस्माद्धर्मिणोऽभिन्नत्वात्, तत्स्वरूपवद्[5]; अतोऽपि कथमेकं[6] सदसद्रूपम् ? इति । धर्मिणो[7] वा भेदः, सदसत्त्वयोरभिन्नत्वात्, तत्स्वात्मवत्[8]; इत्थमपि कथमेकमुभयरूपम् ?[9] । अथ भेदाभेदः[10], अत्रापि येनाकारेण भेदः तेन भेद एव ? येन चाभेदः तेनाभेद एव ? तदेवमपि[11] नैकमुभयरूपम् ; अथ येनैवाकारेण भेदस्तेनैवाभेदः, येनैवः चाभेदः तेनैव भेदः; इति ? एतदप्यचारु, विरोधात् ; तथाहि—यदि येनाकारेण भेदः, कथं तेनैवाभेदः ? अथाभेदः, कथं भेदः ? इति । अथ येनाप्याकारेण भेदः, तेनापि भेदश्चाभेदश्च, इत्युभयम् ? येनापि चाभेदः, तेनाप्यभेदश्च भेदश्च, इत्युभयमेव ? अत्रापि येनाकारेण भेदः, तेन भेद एव; येन चाभेदः, तेनाभेद एव; इति तदेवावर्तते[12] ।

किं च;-भेदाभेदमभ्युपगच्छतावश्यमेवेदमङ्गीकर्तव्यम्,-इह धर्मधर्मिणोर्धर्मधर्मितया[13] भेदः, स्वभावतः[14] पुनरभेदः; स्वभावतोऽपि हि तयोर्भेदेऽङ्गीक्रियमाणे परस्परतः प्रविभक्तरूपं पदार्थद्वयमेवाङ्गीकृतं[15] स्यात्, न पुनरेकं[16] द्विरूपम्; इति । तदत्रापि निरूप्यते,-न ह्यनासादितस्वभावभेदयोर्धर्मधर्मिणोर्धर्मधर्मितयाऽपि[17] भेदो युज्यते । तथाहि—यदि यो धर्मस्य स्वं[18]·

---

१. एकमिति न स्याद्, अभेदहेतुत्वात्तस्य । २. अभेदो हि द्विधा भवति । सत्त्वासत्त्वधर्मौ धर्मिणा सह भिन्नौ विद्येते ? आहोश्विद्धर्मी सत्त्वासत्त्वधर्माभ्यां सह भिन्नो भवति ? इति विकल्पद्वयं निराकरोति, ३. धर्मिणो धर्मावभिन्नौ चेत् । ४. धर्मिणोरभेदे सति एकेन धर्मिणाऽभेदात् सत्त्वासत्त्वयोर्धर्मयोरेकत्वं स्यात् । ५. धर्मिस्वरूपवत् । ६. एकमेव हि तद्, इति भावः । ७. वाशब्दः पक्षान्तरसूचकः । अथ वा धर्मधर्मिणोरभेदे सति धर्मिणः पक्षस्यापि सत्त्वासत्त्वाभ्यां धर्माभ्यां द्वाभ्यां सहाभेदात् । ८. धर्म° । ९. एकमिति न स्यात्, किं तूभयमेव स्यात् । १०. धर्मधर्मिणोः । ११. भेदाभेदाङ्गीकारे तत्त्वतः पूर्वोक्तदोषानतिक्रमात् । १२. चक्रकमनवस्था वा । १३ नियतस्वरूपतया । १४. वस्तुत । १५. धर्मधर्मिरूपम् । १६ वस्तु । १७. धर्मधर्मिनियतरूपतया । १८. वस्तुत्वलक्षणः ।

भावः, स एव धर्मिणोऽपि? एवं सति असौ धर्मी धर्म एव स्यात्, तत्स्वभावत्वात्, धर्मस्वरूपवद्; धर्मो वा धर्मिस्वभावाव्यतिरिच्यमानमूर्तिर्धर्मिमात्रमेव स्यादिति? ततश्चैवं धर्मधर्मिणौ स्वभावभेदानासादनेनाप्रतिलब्धभेदौ कथं भेदनिमित्तं भवतः? इति। न च स्वभावतोऽपि तयोर्भेदाभेदकल्पना युक्ता, पूर्वोक्तदोषानतिवृत्तेः॥

भेदो वा स्यादभेदो वा द्वयं वा धर्मधर्मिणोः।
भेदेनैकमनेकं[1] स्या-दभेदेऽपि न युज्यते[2] ॥ १ ॥
द्वयपक्षोऽपि चायुक्तो विकल्पानुपपत्तितः।
तेनानेकान्तवादोऽय-मज्ञैः समुपकल्पितः ॥ २ ॥

किं च;—सविशिष्टाश्च[3] विषयव्यवस्थितयः, न च सदसद्रूपं वस्तु संवेद्यते, उभयरूपस्य संवेदनस्याभावात्; तथाहि—नाक्षजे विज्ञाने सदसत्त्वे प्रतिभासेते, असत्त्वस्या[4]रूपित्वात्[5], रूपित्वे वाऽसत्त्वविरोधात्, तथानुभवोभावाच्च॥

न च कार्य[6]द्वारेणापि सदसद्रूपं[7] वस्तु प्रतिपत्तुं शक्यते, यतः—नोभयरूपं[8] कार्यमुपलभ्यते; न च तत्कार्यकरणे प्रवर्तमानं केनचिदाकारेण करोति, केनाचिन्न करोति, एकस्य करणाकरणविरोधात्; सर्वात्मना च करणे तद्भाव[10]रूपमेव स्यात्; तथाहि—नाभावः कस्यचिदपि कारणं भवितुमर्हति, अभाव[11]स्वाविरोधात्, तत्कारणत्वे[12]

---

१. स्वरूपाभेदात् २ एकमनेक न युज्यते, एकत्वादेव। ३. ज्ञानायत्ताः। ४. अस्माद्युपलक्षणमिदम्। ५. नाक्षजज्ञानेन तुच्छानुभव। ६ कार्यमत्र सजातीयम्। ७. इह मृदादिरूप कारण जैनैः सदसद्रूपमभ्युपगत। तच्च न कार्यद्वारेणावबोद्धु पार्यते। यत.—सर्वमपि कार्यमत्र लोके समानजातीय कारणेन सह सदृश यत् कारणस्वभाव गमयितु समर्थं। न च कार्य घटादि मृदाद. सदसद्रूप वेद्यते, विद्यमानरूपत्वेनैव तस्य प्रत्यक्षत एवोपलम्भात्, इति। ८. वस्तु। ९. कार्यस्येति शेषः। १०. वस्तु। ११. सकलशक्तिविकलस्तुच्छो ह्यभावः। १२ अभावस्य।

च विश्वमदरिद्रं स्यात्; ततं एव कटककुण्डलाद्युत्पत्तेः; न च 'तस्मान्निरुपाख्यतयाऽविशिष्टात् कस्यचिदेव भाव, न सर्वस्य' इति वक्तुं युज्यते, हेत्वभावात्[3]। अत श्रद्धागम्यमेवेद सद सद्रूपं वस्तु, इति । तथा चोक्तम्—

न च प्रत्यक्षसंवेद्यं, कार्यतोऽपि न गम्यते ।
श्रद्धागम्यं यदि परं वस्त्वेकमुभयात्मकम् ॥ १ ॥

इति प्रथमपूर्वपक्ष ॥ १ ॥

एतेन नित्यानित्यमपि प्रत्युक्तमेवमवगन्तव्यम्, विरोधादेव । तथाहि—अप्रच्युतानुत्पन्नस्थिरैकस्वभावं[6] नित्यमाख्यायते, प्रकृत्यैकक्षणस्थितिधर्मकं चानित्यमिति । ततश्च यदि नित्यम्, कथमनित्यम्? अनित्यं चेत्, कथं नित्यं? इति ॥

स्याद्[9]रेका—'न हि कूटस्थनित्यतया नित्य द्रव्यमभ्युपगम्यतेऽस्माभिः, परिणामिनित्यताभ्युपगमात्; किं तु पूर्वोत्तरक्षणप्र[10]विभागेन प्रबन्धवृत्त्या । न ह्यस्य[11] पर्यायाणामिवोच्छेदः, तद्रू[12]पेण नशप्रतीतेः[13]। पर्याया एव हि पर्यायरूपेण[14] निरुध्यन्ते[15],

---

१. अभावादेव । २. अभावात् । ३. मृदादेरिव घटादेः । ४ मृदादेरिव घटादौ प्रतिनियतशक्त्यभावेन । ५. एकत्रानेकविरुद्धधर्माध्यासायोगेन । ६. अप्रच्युतो निवृत्तिस्वभावतयाऽनुत्पन्नः सदाभावेन स्थिर, एवरूपतया एकः स्वभावो यस्य । क्षणस्थितिस्वभावमपि एकस्वभाव स्यात्, तद्व्यवच्छेदाथ स्थिरग्रहणम् । स्थिरैकस्वभावमपि मुक्तवस्तु कैश्चिन्नित्यमिष्यते, तद्व्यवच्छेदायानुत्पन्नेति । अनुत्पन्नस्थिरैकस्वभावमपि स्वप्रच्युतिसमय यावत् कैश्चिन्नित्यमिष्यते ( घटप्रागभावादि ), तद्व्यवच्छेदायाप्रच्युतेति । ७ स्वभावेन । ८. एकरूपतया । ९. मीमांसकैरिवेति शेष । १०. पूर्वोत्तरक्षणयोः कालसमयलक्षणयोर्नारकमनुष्ययोरिव परस्पर यः प्रविभागोऽत्यन्तभेदरूप, तेनोपलक्षिता या प्रबन्धवृत्ति सर्वक्षणेष्वेकद्रव्यानुवृत्तिलक्षणा, तया नित्यत्वमास्थीयते जैनैः । ११. द्रव्यस्य । १२. पूर्वोत्तरक्षणप्रविभागेन द्रव्यरूपेण । १३. उच्छेदेन । १४. तत्तत्क्षणस्थितिस्वभावतया विनश्यन्ति । १५ नश्स्वभावतया तन्निरोधबीजम्. ।

न तु द्रव्यम्; इति नित्यमभ्युपगम्यते' ॥

इयमप्ययुक्ता, यस्माद्, एषाप्यत्र नित्यता न संभवति, पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः; तथाहि—न पर्यायव्यतिरिक्तं द्रव्यमस्ति, तथानुभवाभावात्[1]; व्यतिरिक्तभावे वा, अनेकरूपैकवस्तुवादहानिप्रसङ्गः । तथा चोक्तम्—

पर्याया भेदिनो नित्यं द्रव्यं स्यात्तत्स्वरूपवत् ।
स्याद्वादविनिवृत्तिश्च नानात्वे संप्रसज्यते ॥ १ ॥

व्यतिरिक्ताव्यतिरिक्तपक्षस्तु विरोधाघ्रातत्वादनुद्घोष्य एव ॥

इति द्वितीयपूर्वपक्षः ॥ २ ॥

एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यम् । तथाहि-एकं सामान्यम्, अनेके विशेषाः; तथा नित्यं सामान्यम्, अनित्या विशेषाः; तथा निरवयवं सामान्यम्, सावयवा विशेषाः; तथा अक्रियं सामान्यम्, सक्रिया विशेषाः; सर्वगतं सामान्यम्, असर्वगता विशेषाः । ततश्च तद्यदि सामान्यरूपम्, कथं विशेषरूपम्? विशेषरूपं चेत्, कथं सामान्यरूपम्? इति ।

किं च;—सामान्यविशेषोभयरूपत्वे सति वस्तुनः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्गः; तथाहि—विषमोदकक्षीर[6]शर्करादि[7]ष्वर्कत्वाभिन्नं नानास्वभावमेकं सामान्यं वर्तते । ततश्च न विषं विषमेव, मोदकाद्यभिन्नसामान्याव्यतिरेकात्; नापि मोदको मोदक एव, विषाभिन्नसामान्या[11]भेदात् ॥

---

१. न हि पिण्डशिवकादिव्यतिरिक्तं मृद्द्रव्यमनुभूयते । २ पर्यायेभ्यो द्रव्यस्य । ३. पर्यायस्य तावत् । ४. पर्यायद्रव्ययोः । ५. नित्यानित्यनिराकरणेन । ६ श्वेताश्वः । ७ आदिशब्दाद्रजादि । ८ भेदः । ९. सत्त्वादि । १०. मोदकस्य । ११. इतरेतराभिन्नसामान्यभेदेन ।

किं तर्हि उभयमपि उभय[1]रूपम् ?। ततश्च विषार्थी विषे प्रवर्तेत मोदके च, एवं मोदकार्थ्यपि मोदके विषे च। लोकश्च विषार्थी विष एव प्रवर्तते, न मोदके; मोदकार्थ्यपि मोदक एव, न विषे; इत्यस्य नियमस्योच्छेद[2]ः स्यात्। तथा च विषे भक्षिते मोदकोऽपि भक्षितः स्यात्, मोदके भक्षिते विषं भक्षितं स्यात्; तथा च स[3]ति प्रतीति[4]विरोधः स्यात्। एवं क्षीरमपि न क्षीरमेव, कर्काद्यनर्थान्तरभूतसामान्याव्यतिरेकात्; कर्कोऽपि न कर्क एव, क्षीराद्यव्यतिरिक्तसामान्याव्यतिरेकादेव। ततश्च इहापि क्षीरार्थी न क्षीर एव प्रवर्तेत, अपि तु कर्केऽपि; एवं कर्कार्थ्यपि न कर्क एव, किं तर्हि? क्षीरेऽपि। न चेत्थमनियमेन प्रवृत्तिर्दृश्यते।

स्यादेतद्,-'विषादिषु विशेषरूपताप्यस्त्येव, सा तद[5]र्थिनो नियमेन प्रवृत्ते[6]र्बीजम्, तद्भ[7]क्षणे च नान्यभक्षणं स्यात्; इति'॥

एतदयुक्तम्, विकल्पानुपपत्तेः; तथाहि—विषादिषु विशेषरूपता मोदकादिविशेषरूपव्यावृत्ता वा स्यात्? स्वरूपनियता वा?। न तावन्मोदकादिविशेषरूपव्यावृत्ता, तद[8]नर्थान्तरभूतसामान्याव्यतिरेकात्; व्यतिरेके चोभयरूपवस्तुवादहानिप्रसङ्गात्; व्यतिरेकाव्यतिरेकपक्षस्य च विरोधेन तिरस्कृतत्वात्। नापि स्वरूपनियता, मोदकाद्यभिन्नसामान्यानर्थान्तरत्वात्; अर्थान्तरत्वे च सैव विशेषरूपता अर्थक्रियार्थिप्रवृत्तिविषयत्वाद् वस्त्ववस्तु, तत्फ[10]लविशेषोपादानभावलक्षितस्वभावत्वात् वस्तुनः; सा[11] च तादृशी नान्यत्रास्ति, अर्थिनः प्रवृत्त्यभावात्। त्यज्यतामुभयरूपैकवस्तुवादाभिमानः॥

तथा चोक्तम्—

---

१ विषमोदकरूपम्। २. सामान्यविशेषोभयरूपभवन्मताङ्गीकारे। ३ मोदकभक्षणे विषभक्षणे जाते सति। ४ अनुभव ५. विषार्थिन। ६. विषभक्षणे प्रयत्नस्य। ७. विषादि। ८. मोदकादि। ९ मोदकादि। १०. स चासौ फलविशेषश्च य. तेनैव दध्यादिरूपवस्तुना साध्यः, तस्योपादाने भावो हेतुभावः, तेन लक्षितः स्वभावो यस्य वस्तुन, तत्तथा. तद्भावस्तत्त्वम्. तस्मात्। ११. अर्थक्रिया।

प्रवृत्तिनियमो न स्याद् विषादिषु तदर्थिनः।
मोदकाद्यपृथग्भूत—सामान्याभेदवृत्तिषु ॥ १ ॥

भेदे[2] चोभयरूपैक-वस्तुवादो न युज्यते।
भेदा[3]भेदविकल्पस्तु विरोधेनैव बाधितः ॥ २ ॥

विशेषरूपं यत्तेषु[4] तत्प्रवृत्ते[5]र्नियामकम्।
साध्वेतत्, किन्तु वस्तुत्वं तस्यै[6]वेत्थं प्रसज्यते ॥ ३ ॥

तथा परेणाप्युक्तम्,—

सर्व[8]स्योभ[7]यरूपत्वे तद्विशेषनिराकृतः।
नोदितो[9] दधि खादेति, किमुष्ट्रं [10]नाभिधावति ? ॥१॥

तथाहि-उष्ट्रो[11]ऽपि स्याद्दधि, नापि स[12] एवोष्ट्रः, येना[13]न्योऽपि[14] स्यादुष्ट्रः। तथा दध्यपि स्यादुष्ट्रः, नापि तदेव[15] दधि, येना[16]न्यदपि[17] स्यात्[18]। तदे[19]वमनयोरेक[20]स्यापि कस्यचित्तद्रूपमात्रस्याभावात्-स्वरूपस्य वाऽतद्भा[21]विनः स्वनियतस्याभावात् न

---

१. भेदे सामान्यादेषामिष्यमाणे। २. द्वयस्यापि प्रत्येकमेवैकत्वात्। ३. सामान्यविशेषयोः। ४. विषादिषु। ५. विषादिविषयायाः। ६. विशेषस्य। ७. सामान्यविशेषरूपत्वे। उभयग्रहणमनेकत्वोपलक्षणम्। ८. अस्मिन् सति किम्? इत्याह–'तद्विशेष०' उष्ट्र उष्ट्र एव, न दधि; दधि दध्येव, नोष्ट्रः; इत्येवरूपस्य विशेषस्य ॥ ९. पुरुषः। १०. खादितुम्, इति शेषः। ११. केनचित्प्रकारेण। १२. उष्ट्र एव। १३. कारणेन। १४. दध्यादि। १५. दध्येव। १६. कारणेन। १७. उष्ट्रादि। १८. एतेन 'सर्वस्योभयरूपत्वे' इति पदं व्याख्यातम्। १९. 'तद्विशेषनिराकृतेः' इत्येतत् 'तदेवमनयोः' इत्यादिना व्याचष्टे। २०. उभयथा हि दध्युष्ट्रयोर्विशेषः स्यात्, दधिरूपाभावो वोष्ट्रो भवेत्, उष्ट्रस्वरूपं वा दध्यसंभविन्युष्ट्रस्वरूप एव नियतं स्यात्। एवं दध्यपि वाच्यम्। आद्यस्य तावदसंभवः 'तद्'इत्यादिना द्वितीयस्य च 'स्वरूप'इत्यादिना कथ्यते। २१ दध्न उष्ट्रस्य वा।

कश्चिद्विशेषः, इति । ततश्च दधि खादेति चोदितः उष्ट्रमपि खादेत् ॥

अथास्त्यतिशयः कश्चिद्, येन भेदेन वर्तते ।
स एव दधि सोऽन्यत्र नास्तीत्यनुभयं परम् ॥ १ ॥

अथानयोः कश्चिदतिशयोऽस्ति, येनायं तथानोदितः क्षीरविकार एव प्रवर्तते, नान्यत्र । एवं तर्हि 'स एव' अतिशयो ऽर्थक्रियार्थिप्रवृत्तिविषयः तत्फलविशेषोपादानभावलक्षितस्वभावं हि वस्तु 'दधि' इति । 'स' च तादृशः स्वभावः 'अन्यत्र नास्तीति' प्रवृत्त्यभावाद्दध्यर्थिनः । तस्मान्नोभयरूपम्; इत्येकान्तवादः ॥

इति तृतीयपूर्वपक्षः ॥३॥

एवमभिलाप्यानभिलाप्यमपि विरोधबाधितत्वादेवानुद्घोष्यम् । तथाहि–अभिलप्यते यत् तदभिलाप्यम्, एतद्विलक्षणं चानभिलाप्यम्, इति । ततश्च यदि तदभिलाप्यम्, न तर्हि अनभिलाप्यम्; अनभिलाप्यं चेत्, न तर्ह्यभिलाप्यम्; इति, एकस्यानेकविरुद्धधर्माभावात् ॥

इति चतुर्थपूर्वपक्षः ॥ ४ ॥

किं च;—विरोधिधर्माध्यासितस्वरूपत्वाद्वस्तुनोऽनेकान्तवादिनो मुक्त्यभावप्रसङ्गः; तथाहि—एतदात्माङ्गनाभवनमणिकनकधनधान्यादिकमनात्मकम्, अनित्यम्, अशुचि,

१. तत्साध्या या अर्थक्रिया, तया अर्थाय पुरुष । २. दध्नैव साध्यत्वात् तत्फलविशेषः, स चासौ फलविशेषश्च, तस्योपादानभावो हेतुभाव, तेन लक्षितः स्वभावो यस्य वस्तुनः, तदेव दधि, इति कृत्वा । ३. अनन्तरोक्तदधिस्वभावः । ४. उष्ट्रे, कुतः ? दध्यर्थिन उष्ट्रे प्रवृत्त्यभावात् । ५ परे परिकल्पितान्वयाख्यात्मशून्यम् ।

दुःखम्, इति कथञ्चिद्विज्ञाय[1], भावतस्[2]तथैव भावयन्, वस्तुतः तत्राभिषङ्गास्पदाभावाद्, भावनाप्रकर्षविशेषतो वैराग्यमुपजायते; ततो मुक्तिः। तथाहि—आत्मात्मीयदर्शनमेव मोहः[3], तत्पूर्वक एवात्मीयस्नेहो रागः, तत्पूर्विकैवानुरागविषयोपरोधिनि प्रतिहतिर्द्वेष, इति कृत्वा सर्वमुपपद्यते। यदा तु तदात्माङ्गनादिकं सात्मकाद्यपि[4], तदा यथोक्तभावना[5]ऽभावात्, भावेऽपि मिथ्यारूपत्वात्[6], वैराग्याभावः, तदभावाच्च मुक्त्यभावः, इति ॥

इति पञ्चमपूर्वपक्षः ॥ ५ ॥

इतिपूर्वपक्षग्रन्थः ॥

तदेवमेते मन्दमतयो दुस्तर्कोपहतास्तीर्थ्याः स्वयं नष्टाः, परानपि नाशयन्ति मन्दमतीन्। अतः प्रतिविधीयते—

तत्र यत्तावदुक्तम् "कथमेकमेव घटादिरूपं वस्तु सच्चासच्च भवति?" तदेतदागोपालाङ्गनादिप्रतीतमनाशङ्कनीयमेव। यतः-तत्स्वद्रव्यक्षेत्रकालभावरूपेण सद्वर्तते; परद्रव्यक्षेत्रकालभावरूपेणाऽसत्; ततश्च सच्चासच्च भवति। अन्यथा, तद्[7]भावप्रसङ्गात्; तथाहि-यदि तद्[8] यथा स्वद्रव्यक्षेत्रकालभावरूपेण सद्वर्तते, तथैव परद्रव्यक्षेत्रकालभावरूपेणापि स्यात्; ततश्च तद् घटादि वस्त्वेव न स्यात्, परद्रव्यक्षेत्रकालरूपेणापि सत्त्वात्, तदन्य[9]स्वात्मवत्। तथा यदि, यथा परद्रव्यक्षेत्रकालभावरूपेणासद्, एवं स्वद्रव्यक्षेत्रकालभावरूपेणापि स्यात्; इत्थमपि तद्घटादि वस्त्वेव न स्यात्, परद्रव्यक्षेत्रकालभावरूपेणासत्त्वे सति स्वद्रव्यक्षेत्रकालभावरूपेणाप्यसत्त्वात्,

१. विशिष्टक्षणोत्पादकस्वभावतया हेतुपरम्परातो विशिष्टक्षणोत्पादेन विज्ञाय श्रुतिमय्या(च्या) प्रज्ञया। २. परमार्थेन। ३. विपर्ययरूपत्वात्। ४ शबलरूपतया सात्मकम्, नित्यम्, शुचि, अदुःखम्; इति। ५. वस्तुनोऽन्यथात्वेन। ६. भावनायाः। ७. घटवस्तु। ८. घटवस्तु। ९. पटादि स्वात्मवत्।

खरविषाणवद्[1]; इत्येवं तदभावप्रसङ्गात्[2] सदसद्रूपं तदङ्गीकर्तव्यम्, इति ॥ तथा च द्रव्यतः–पार्थिवत्वेन सत्, नाबादित्वेन; तथा क्षेत्रतः–इहत्यत्वेन, न पाटलिपुत्रकादित्वेन; तथा कालतः-घटकालत्वेन, न मृत्पिण्डकपालकालत्वेन[3]; तथा भावतः–श्यामत्वेन, न रक्तादित्वेन; इति । अन्यथा, इतररूपापत्त्या[4] तत्स्वरूपहानिप्रसङ्गः[5], इति । द्रव्याद्यात्मकत्वं च घटस्य तैर्विना[6]ऽभावात्[7], तत्परिणामत्वाच्च; अतत्परिणामत्वे च, तदभावप्रसङ्गात्; इति ॥

स्यादेतद्[8], स्वद्रव्यसत्त्वमेव परद्रव्यासत्त्वम्, स्वक्षेत्रसत्त्वमेव परक्षेत्रासत्त्वम्, एवं स्वकालसत्त्वमेव परकालासत्त्वम्, एवं स्वभावसत्त्वमेव च परभावासत्त्वम्[9]; इति । तथा च-घटवस्तुनः पार्थिवद्रव्यसत्त्वमेवाबादिद्रव्यासत्त्वम्, तथेहक्षेत्रसत्त्वमेव पाटलिपुत्रकाद्यसत्त्वम्, तथा घटकालसत्त्वमेव मृत्पिण्डकपालकालासत्त्वम्, तथा श्यामत्वसत्त्वमेव रक्ताद्यसत्त्वम्, तस्यैकस्वभावत्वाद् निरंशत्वाद्, इति[10] ॥

एतदप्यसारम्, तस्यैकस्वभावत्वेऽवस्तुत्वप्रसङ्गात्[11]; तथा हि–'यदि पार्थिवद्रव्यसत्त्वमेवाबादिद्रव्यासत्त्वम्,' एवं तर्हि[12]

---

१. खरविषाणं हि पटरूपेणासदुच्छमिति । २. घटवस्त्वभावः । ३. तथा तत्स्थितिस्वभावत्वलक्षणेन । ४. अबादि । ५. घटादिवस्तु । ६. न हि मृदादिद्रव्यमात्रमेवैकान्तिकस्वभावं तदाधारत्वपरिणतक्षेत्रानाधेयस्वभाव तत्कालभाविना विना कृष्णोर्ध्वादिभावशून्य घट तथाविधक्षेत्राद्यनुवेधादिरहितमृदादिद्रव्यमात्ररूपेण प्रकारेणानुपलब्धेः *तत्तदन्यतममात्रत्वे च तदितरवैकल्येन तत्स्वरूपानुपपत्तेः+ घटबुद्ध्यभावप्रसङ्गः । ७. पार्थिवत्वाद्यभावात् । ८. बौद्धः प्राह–। ९. नहि स्वद्रव्यादिसत्त्वादर्थान्तरभूत परद्रव्याद्यसत्त्वम् । १०. मन्येथाः । ११. सत्त्वस्यैवासत्त्वरूपत्वात् । १२. यद्यस्मादभिन्न तत्तत्स्वरूपमेव, तच्छब्दवाच्य च ।

---

* तस्य घटस्य, तेषा पार्थिव द्रव्यादिनाम्, अन्यत्वे पार्थिवद्रव्यमात्रत्वे सति इहत्यत्वाद्यभावेन नाधिकृताधिकृत (?) पार्थिवद्रव्यत्वस्वरूपानुपपत्तिः ।
+ अनुपपत्तिश्च विविक्ताना पार्थिवद्रव्यत्वादीनामसभवात् ।

यथा तत्पार्थिवद्रव्यत्वेन सत् एवमबादिद्रव्यत्वेनापि सदेव स्यात्, तत्सत्त्वाव्यतिरिक्तत्वादितरासत्त्वस्य; यथा वा अबादि-द्रव्यत्वेनासत् तथा पार्थिवत्वेनापि असदेव स्यात्, तदस-त्त्वाव्यतिरिक्तत्वात्तत्सत्त्वस्य । एवं यदि 'इहक्षेत्रसत्त्वमेव पाट-लिपुत्राद्यसत्त्वम्,' ततश्च तद्यथेह सत् तथा पाटलिपुत्रादाव-पि स्यात्, इहसत्त्वाव्यतिरिक्तत्वात् तत्रासत्त्वस्य; यथा वा पाटलिपुत्रादावसत् तथेहापि स्यात्, तदसत्त्वाव्यतिरिक्तत्वा-दिहसत्त्वस्य । एवं यदि 'घटकालसत्त्वमेव मृत्पिण्डकपालका-लासत्त्वम्,' ततश्च तद्यथा घटकाले सत् एवं मृत्पिण्डकपाल कालेऽपि स्यात्, तत्सत्त्वाव्यतिरिक्तत्वात्तदसत्त्वस्य; यथा वा मृत्पिण्डकपालकालेऽसत् तथा घटकालेऽपि स्यात्, तदस-त्त्वाव्यतिरिक्तत्वात्तत्सत्त्वस्य । एवं यदि 'श्यामत्वसत्त्वमेव रक्त-त्वाद्यसत्त्वम्,' ततश्च तद्यथा श्यामत्वेन सत् एवं रक्तत्वा-दिनापि स्यात्, तत्सत्त्वाव्यतिरिक्तत्वादितरासत्त्वस्य; यथा वा रक्तत्वादिनाऽसत् एवं श्यामत्वेनापि स्यात्, तदसत्त्वाव्य-तिरिक्तत्वात्तत्सत्त्वस्य । ततश्च तद्[६]इतररूपापत्त्यादिनाऽव-स्तुत्वप्रसङ्गः, इति ॥

अथोच्येत[७],— नहि नः[८] किञ्चिदबाध्यसत्त्वं निरुपाख्यं नामा-स्ति, यदपेक्षयाऽव्यतिरिक्तविकल्पोपन्यासेनावस्तुत्वापत्त्यात्म-नो न्याया[९]भिज्ञता ख्याप्यते; अपि तु पार्थिवद्रव्यसत्त्वमेव विशिष्ट[१०]मेक[११]स्वभावमबाध्य[१२]सत्त्वमुच्यते । ततश्च यथोक्त[१३]दो-षाभावाद् व्यर्थो विकल्पोपन्यासपरिश्रमः, एवं शेषेष्वपि भावनीयम्; इति ॥

---

१. यथा घटसत्त्वं तथा चेदमसत्त्वं व्यापकानुपलब्धि. । २. पार्थि-वद्रव्य । ३. माहात्म्यमन्तरेणाव्यतिरेकाभावात्, इति भावः । ४. अबादिद्रव्य । ५. अबाध्यसत्त्वस्य परमार्थतोऽभावात्, इत्यर्थः । ६. तस्य पार्थिवद्रव्यादिसत्त्वस्य अबादिद्रव्यत्वरूपापत्त्यादिना । ७. बौद्धेन । ८. अस्माकं बौद्धानां । ९. सूक्ष्मोक्तिवत्त्वम् । १०. त्रैलोक्यव्यावृत्तम् ११. (सदै) सदेकस्वभावतया । १२. न तु तदन्यत् । १३. अवस्तुत्वप्रसङ्गरूपः ।

अहो! दुरन्तो मोहः[1], स्ववाचोऽपि[2] प्रतिपादयन्ननेकान्तं न प्रतिपद्यते। तथाहि—'पार्थिवद्रव्यसत्त्वमेव विशिष्टमबाध्यसत्त्वम्[3],' इति वक्ति, न च सदसद्रूपं वस्तु प्रतिपद्यते; इत्यपूर्वो[4] विभ्रमः। न[5] हि स्वपरसत्ताभावाभावोभयरूपतां विहाय वस्तुनो विशिष्टतैव[6] संभवति। न च तेनैव[7] स्वभावेन पार्थिवद्रव्यत्वेन सद्वर्तते, तेनैवाबादिद्रव्यत्वेनासत्[8], अभिन्ननिमित्तत्वे सति एकत्र सदसत्त्वयोर्विरोधात्; तथाहि-तेनैव स्वभावेन सच्चासच्च, इति? विरुद्धमेतत्[9]॥

स्यादेतद्,—तत्राबादिद्रव्यासत्त्वस्य परिकल्पितत्वाद्यथोक्तदोषाभावः[10]; इति। सोऽयं गण्डप्रवेशेऽक्षितारिकानिर्गमन्यायः[11]; तथाहि—तत्राबादिद्रव्यासत्त्वस्य[12] परिकल्पितत्वात् असत्त्वात् तद्रूपेणाप्यास्तित्वप्रसङ्गः[13]; अनिष्टं चैतत्, इति॥

स्यादेतद्, पार्थिवद्रव्यसत्त्वव्यतिरिक्तमबाध्यसत्त्वं परिकल्पितं, पार्थिवद्रव्यसत्त्वमेव पुनरबाध्यसत्त्वस्वभावमिष्यत एव, इत्यतोऽनपराधः[14]; इति॥

---

१. आदिमध्यान्तरौद्रः। २. येन पार्थिवद्रव्यसत्त्वमेव विशिष्टमिति। ३. अबाध्यसत्त्वस्य स्वभावतया। ४. उभयनिमित्तभावेऽपि उभयाप्रतिपत्तेरपूर्वत्वम् ५. कथम्?। ६. विशेषण विना वैशिष्ट्यायोगात्। ७. घटादि ८. एतदेव व्याख्याति। ९. येनैव सत् तेनैवासन्नस्यात्, इत्यर्थ। १०. न सर्वथैक द्विरूपम्, इति भाव। ११. प्रस्तुतदोषपरिहारेणाधिकतरदोषान्तरापात्तिः, इत्यर्थः। १२. पार्थिवद्रव्यसत्त्वे। यथा घटादौ घटादिद्रव्यासत्त्व परिकल्पितत्वादसद, इतिकृत्वा घटादिरूपेणास्तित्वमेव, एवमबादिरूपेणाप्यास्तित्व स्यात्। १३.अबादिद्रव्यसत्त्वरूपेण पार्थिवद्रव्यसत्त्वस्य। १४.पार्थिवद्रव्यसत्त्वव्यतिरिक्तत्वांशेनैव अबाध्यसत्त्व परिकल्पितमुच्यते। पार्थिवद्रव्यसत्त्वव्यतिरिक्त त्वेतदस्त्येव, इत्युक्तदोषाभावः, इति पराभिप्राय। ( परमार्थतः स्वसत्त्वादसत्त्वादबाध्यसत्त्वस्य। एकरूपम्। वस्तुस्थित्या ) [ कोष्ठकान्तर्गत टिप्पनक कस्य मूलपाठस्य, इति न ज्ञायते। तच्चिन्त्य धीधनैः। ]

अहो ! दुरन्तः स्वदर्शनानुरागः, प्रत्युक्तमपि नावधारयति; यतः-न च तद् येनैव स्वभावेन पार्थिवद्रव्यत्वेन सद्वर्तते तेनैवाबाद्विद्रव्यत्वेनासद्; इत्यादि तदेवावर्तते, इति, अलं स्वदर्शनानुरागाकृष्टचेतसा सह प्रसङ्गेन, इति ॥

अपरस्त्वाह—'सदसद्रूपं वस्तु' इत्यत्रासत्पक्षे प्रसज्यप्रतिषेधो वा स्यात् ? पर्युदासो वा ? ।

किञ्चातः ? ।

उभयथापि दोषः ; तथा हि-यदि 'सन्न भवति' इत्यसत् ? सन्निवृत्तिमात्रं निरुपाख्यमसत् ? ; ततश्च तस्य प्रमाणगोचरातीतत्वाद्वस्तुधर्मत्वानुपपत्तिः ।

अभ्युपगमे वा वस्तुन एव निरुपाख्यत्वप्रसङ्गः; तथाहि-न निरुपाख्यस्वभावं सोपाख्यस्वभावं भवितुमर्हति ।

अथ सतोऽन्यदसद्, सदन्तरमेवासद्, इति ? एवमपि तस्य सदात्मकत्वादेव सदसद्रूपत्वानुपपत्तिः; तथाहि—न 'सत् सदन्तरात्मकम्' इति सचेतसो वक्तुं युज्यते, इति ॥

एतदप्ययुक्तम्, भगवदर्हन्मतापरिज्ञानात्, पक्षद्वयेऽपि दोषाभावात् ॥

कथमभाव. ? इति ॥

उच्यते—यद्यपि सन्निवृत्तिमात्रं निरुपाख्यमसत्, तथापि स्वरूपेण सत्त्वात्, तद्रूपेण चासत्त्वात्, सदसद्रूपतैव; इति ।

१. नैयायिकादिः । २. कोऽयः ? तुच्छधर्मकम् । ३. प्रसज्यप्रतिषेधपक्षे । ४. एतदेव व्याख्याति । ५. पर्युदासपक्षे । ६. असतः । ७. पररूपेण ।

८. यस्माद्वस्त्वेवात्मघटादिसदसद्रूपतयोभयात्मकं वर्तते । न सत्त्वाननुविद्धमसत्त्वं नाम, तत्र वस्तु [illegible] वस्त्विति, अतो यद्यपि 'सन्न भवतीति असत्' [illegible] परद्रव्यादिरूपेण सतः* प्रतिषेधात्; तस्य च परद्रव्यादि[illegible] विवक्षितसत्त्वेऽसत्त्वात्, तत्स्वरूपस्य तत्प्रतिषेधात्; [illegible] स्वस्य च स[illegible]नुवेधाद्—विवक्षितसत्त्वानुवेध[illegible] कारण[illegible] प्रसज्यप्रतिषेधपक्षोक्तदोषाभावात्, पर्युदास[illegible] न क्षितिमावहति ।

* पटादेः ।

ततश्चैवं न सर्वथा सत्त्वमसत्त्वपरिहारेण व्यवस्थितम्, न चासत्त्वं सत्त्वपरिहारेण ॥

न चानयोरविशेष एव, भिन्ननिमित्तत्वात्; तथा हि–“स्वद्रव्यादिरूपेण सत्, परद्रव्यादिरूपेण चासद्;” इत्युक्तम्। ततश्च तद् यत एव सत् अत एवासद्, परद्रव्यादि-रूपाऽसत्त्वे सति स्वद्रव्यादिरूपेण सत्त्वाद्; तथा यत एवासत् अत एव सद्, स्वद्रव्यादिरूपसत्त्वे सति परद्रव्यादिरूपेणा-सत्त्वात्।

अत एव चैकत्र सदसत्त्वयोर्विरोधो न संभवति, भिन्न-निमित्तत्वाद् धर्मिभावात्। एतच्चोत्तरत्र प्रपञ्चयिष्यामः। अनुभवसिद्धत्वाच्च; तथाहि–स्वपररूपाव्यावृत्तव्यावृत्तरूपमेव तद्वस्तु अनुभूयते ॥

स्यादाशङ्का,–‘स्वरूपाव्यावृत्तिरेव पररूपव्यावृत्तिः’ इति। एषाप्ययुक्ता, विहितोत्तरत्वात् ॥

यस्मादेवं तस्मात् समुत्सारितपक्षपातैर्न्यायवेदिभिर्युक्ति-युक्तत्वात् सदसद्रूपं वस्त्वङ्गीकर्तव्यम्। आह च—

यस्मात्सत्त्वमसत्त्वं च न विरुद्धं मिथो द्वयम्।
वस्त्वेकं सदसद्रूपं ननु तत् किं न युज्यते ? ॥ १ ॥

---

१. तदनात्मकत्वेन। २. भावात्मकत्वेन। ३. भावात्मकत्वेन ४. स्वद्रव्यादयः सत्त्वकल्पनानिमित्तम्, परद्रव्यादयश्चासत्त्वकल्पनायाः। ५. अनुभवे च तद्बाधाद्यनेकरूपतायामिव को विरोधः ? । ६. वस्तुतः स्वरूपाव्यावृत्तिः पररूपव्यावृत्तिश्च द्वेऽप्यनुभूयेते; इत्युभयात्मक वस्तु, इति आचार्येण स्थापिते पर आशङ्कते–स्यादाशङ्केति। ७. एकरूपा। ८. ‘न स्वरूपसत्त्वमेव पररूपासत्त्वम्’ इत्यादिना भिन्ननिमित्तत्वेनानयोरेकत्वाभावात्; तत्त्वतोऽन्यरूपाभावमन्तरेणान्यथावृत्त्या(स्य) सिद्धेः। ९. शबलरूपतया।

यदप्युक्तम्,–" सदसद्रूपं वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तुधर्मतयाऽभ्युपगतं भवति "; एतदिष्यत एव ॥

यत्पुनरिदमुक्तम्–" ततश्चात्रापि वक्तव्यम्; धर्मधर्मिणोः किं तावद्भेदः,–" इत्यादि। अत्रापि सर्वथा भेदपक्षोदितोऽभेदपक्षोदितश्च दोषोऽनभ्युपगमतिरस्कृतत्वादेव न नः क्षितिमावहति। भेदाभेदपक्षस्त्वभ्युपगम्यत एव ॥

आह–नन्वत्रापि "येनाकारेणभेदस्तेन भेद एव,"–इत्यादि दूषणमुक्तम्।

उक्तमिदम्, अयुक्तं तूक्तम्, अधिकृतविकल्पस्यार्थापरिज्ञानात्, अन्योन्यव्याप्तिभावेन भेदाभेदपक्षस्य जात्यन्तरात्मकत्वात् केवलभेदाभेदानुपपत्तेः। न हि 'अन्योन्याननुविद्धावेतौ' इति जैनमतम्, अभेदाननुविद्धस्य केवलभेदस्यासिद्धेः, भेदाननुविद्धस्य चाभेदस्यासिद्धेः। अतः–'येनाकारेण भेदस्तेन भेद एव' इत्यर्थशून्यमेव ॥

अथ " धर्मधर्मिणोर्भेदाभेदः " इति कोऽर्थः? कथञ्चिद्भेदः कथञ्चिदभेदः, इति। तत्र धर्माणां मिथो भेदात् प्रतिनियतधर्म्याश्रितत्वाच्च कथञ्चिद्भेदः। तथाहि—न धर्माणां धर्मिणा सर्वथैकत्वे धर्मतयापि भेदो युज्यते, इति प्रतीतमेतद्। तथा धर्माणामेवाभ्यन्तरीकृतधर्मिस्वरूपत्वाद्धर्मिणोऽपि चाभ्यन्तरीकृतधर्मस्वरूपत्वाच्च कथञ्चिदभेदः, इति। न चात्यन्तभेदे धर्मधर्मिकल्पना युज्यते, अतिप्रसङ्गात् ॥

स्यादेतद्,–उत्प्रेक्षितेयं धर्मधर्मिकल्पना, न तत्त्वतः; इति।

---

१. न ह्यभ्युपगमा एव बाधायै स्युः। २. प्रकारेण। ३. भेदाभेदरूपस्य।

४. " न नरो नर एवेति, न सिंहः सिंह एव वा।
शब्दविज्ञानकार्याणां भेदाज्जात्यन्तरं हि तत् ॥ १ ॥
न नरः सिंहरूपत्वान्न सिंहो नररूपतः।
सामानाधिकरण्येन नरसिंहः प्रतीतितः ॥ २ ॥ "

५ पटादेरपि घटधर्मत्वापत्तेः।

एतदप्ययुक्तम्, दृष्टविरोधात्। न च दृष्टेऽनुपपन्नं नाम, अनुवृत्तव्यावृत्तस्वभावं च वस्त्वध्यक्षतोऽवसीयते। न चाऽऽविद्वदङ्गनादिप्रतीतानुभवापलापः शक्यते कर्तुम्। अनुभवश्च पुरोऽवस्थिते घटादौ तदतद्रूप एवोपजायते; अन्यथा तदभावप्रसङ्गात्॥

स्यादेतद्,—एकस्वभाव एवासावनुभवो घटप्रतिच्छायतयोपजायमानः घटादिप्रतिभासव्यवच्छेदेन ख्याप्यते। न पुनरस्य भावतो द्वे रूपे। तथा चोक्तम्-"एकोपलम्भानुभवाद् 'इदं नोपलम्भे' इति बुद्धेः 'उपलम्भे वा' इति कल्पितायाः समुद्भवाति"।

एतदप्ययुक्तम्,—विहितोत्तरत्वात्, 'तत्स्वरूपसत्त्वमेव पररूपासत्त्वम्' इति निर्लोठितम्॥

[illegible]—एकान्तपर्यायनयमतानुसारिपक्षे कल्पनायोगात्; [illegible]—सा वस्तुनि समुत्पन्ने वा स्याद्? अनुत्पन्ने वा? न तावदनुत्पन्ने, तस्यैवासत्त्वात्; उत्पन्नेऽपि च गृहीते वा स्याद्? अगृहीते वा? न तावदगृहीते, अतिप्रसङ्गात्; गृहीतेऽपि च तद्ग्राहकज्ञानस्याविकल्पकत्वात्, विकल्पज्ञानस्य चातद्विषयत्वात्, तद्भावकाले च तदसत्त्वात्। तत्रैव कल्पना, इति चेत्? न, विकल्पानुपपत्तेः; तथाहि—तत्राप्युत्पन्ने वा स्याद्? अनुत्पन्ने वा? नानुत्पन्ने, असत्त्वात्; नाप्युत्पन्ने, उत्पत्त्यनन्तरापवर्गित्वात्। विकल्पनारूपमेवोत्पद्यते, इति चेत्? न, तस्य हेत्वयोगात्। हेत्वयोगश्च स्वलक्षणादनुत्पत्तेः। स्वलक्षणानुभवाहितसंस्कारात् तज्जन्म, इति चेत्? न, संस्का-

१ सङ्कीर्णत्वेन निश्चितत्वासिद्धेः। २ वस्तु। ३. नीलादौ। ४. एकात्मैव घटादेरुपलम्भानुभवात्, परम 'इद पटादिक ममुपलम्भे, इद घटादिकमुपलम्भे वा इति विकल्पिकायाः बुद्धेः समुद्भवः स्यात्। ५. वस्तुनि। ६ उत्पन्नवस्तु। ७. उत्पन्नवस्त्वविषयत्वात्। वर्त्तमानकालभाविस्वलक्षणानुभवजसंस्कारात। ८. विकल्पज्ञान। ९. उत्पन्नवस्तु। १०. ज्ञाने एव, न तु बाह्येऽर्थे-विषये। ११. ज्ञानेऽपि। १२ विनाशित्वात्।

स्यापि स्वलक्षणस्वरूपानतिक्रमात्; स्वलक्षणरूपत्वे स एव दोषः। सामान्यलक्षणरूपत्वे तु ततस्तदुदय एव कथम्[3]? इति वाच्यम्।

स्यादेतद्,—नहि कल्पनाऽस्वलक्षणमेव, तस्या अपि स्वसंवित्तौ स्वलक्षणत्वात्; उक्तं च—"कल्पनाऽपि स्वसंवित्तावेष्टा, नार्थे, विकल्पनात्" इति।

एतदप्ययुक्तम्, अर्थविकल्पाकारव्यतिरेकेण तत्स्वसंवित्त्यसिद्धेः; सिद्धौ वा, कल्पनायोगात्। अतीतकालानुभूतसंस्कारस्तथापरिपच्यमानः स्वलक्षणानुभवजनितसंस्कारोपपादितविशेषो हेतुः, इति चेत्? न, तस्य स्वलक्षणानुभवजनितसंस्काराद्विशेषः, असिद्धेः।

असिद्धिश्च तत्त्वतस्ततोऽनुपकारात्; तथाहि—स[6] तस्य विकल्पाहितसंस्कारविशेषस्यानुत्पन्नस्योत्पन्नस्य निरुद्धस्य वोपकुर्याद्? इति भेदाः। न तावदनुत्पन्नस्य, तस्यैवासत्त्वाद्, असतश्चोपकाराकरणात्; नाप्युत्पन्नस्य, तस्यानाधेयातिशयत्वाद्, अतिशयाधानमन्तरेण चोपकाराभावाद्, अतिशयाधाने च तदन्यत्वप्रसङ्गात्। द्वावप्येकीभूय तदन्यकरणमेवातिशयाधानं, स एवोपकारः, इति चेत्? न, उपादानकारणविशेषाधानमन्त

1. स्वलक्षणसंस्कारस्य क्षयाक्षयित्वेन तद्भावकाले च तदसत्त्वादित्ययम्। 2. सामान्यरूपसन्दार्गक्षणिकत्वप्रतिभासेऽप्यवस्तुत्वात्कुतोऽस्माद्विकल्पज्ञानस्योदयः? । 3. सामान्यस्यार्थक्रियाकारित्वायोगात्। 4. कल्पना। 5. विकल्पोपादानकारणभूतस्यातीतकालविकल्पजनितसंस्कारस्य। 6. स्वलक्षणानुभवजनितसंस्कारः। 7. विकल्पेन घटोऽयमित्येवंरूपेणातीतकाले विहितो यः संस्कारविशेषः, तस्य। 8. विनष्टस्य। 9. तस्योत्पन्नस्य हि अतिशयाधाने सोऽतिशयो भिन्न एव स्याद्, यद्वातिशयाधानकाले स उत्पन्नोऽन्य एव स्यात्, क्षणादूर्ध्वमनवस्थितेः। 10. अतीतविकल्पजसंस्कारवर्तमानानुभवजसंस्काराभ्याम्। 11. अतीतविकल्पजसंस्कारविशेषाधानं विना।

* विकल्पज्ञान०।

रेण ततः कार्यविशेषासिद्धेः।न चैककालभाविनाऽन्यतो भवतोऽन्यत एव भवतातिशयाधानं युज्यते,तन्निबन्धनस्य तत्कृतविशेषासिद्धेः, तदभ्युपगमे च तत्राप्ययमेव वृत्तान्तः, इति । यत्किञ्चिदेतद्, एवं निबन्धनपरम्परायामपि वाच्यम्, इति । नापि निरुद्धस्य, तस्यैवाविद्यमानत्वाद्, असतश्चोपकारकरणायोगाद्, अभ्युपगमे चातिप्रसङ्गाद् । अतः साधूक्तं 'हेत्वयोगात्' इति । क्षणिकैकान्तपक्षे च फलभावानुपपत्तेः, इति; एतच्च वक्ष्यामः ॥

यच्चोक्तम्—" भेदाभेदमभ्युपगच्छतावश्यं चेदमङ्गीकर्त्तव्यम्-इह धर्मधर्मिणोधर्मधर्मितया भेदः, स्वभावतः पुनरभेदः" इत्यादि । एतदपि 'धर्माणां मिथो भेदात् प्रतिनियतधर्म्याश्रितत्वाच्च कथञ्चिद्भेदः' इत्यादिना प्रत्युक्तम्, प्रकारान्तरेण भेदाभेदासिद्धेः ॥

यदप्युक्तम्, " संविन्निविष्टाश्च विषयव्यवस्थितयः; न च सदसद्रूप वस्तु संवेद्यते उभयरूपस्य संवेदनस्याभावाद्" इत्यादि । एतदपि 'अनुवृत्तव्यावृत्तस्वभावं च वस्त्वध्यक्षतोऽवसीयते' इत्यादिना परिहृतम्, उभयरूपस्य संवेदनस्याबाधितत्वात् ॥

यच्चोक्तम्—" न च कार्यद्वारेणापि सदसद्रूपं वस्तु प्रतिपत्तुं शक्यते, यतो नोभयरूपं कार्यमुपलभ्यते " इत्यादि । एतदप्यनवकाशम्, वस्तुस्थित्योभयरूपस्योपलम्भस्य साधितत्वात् ।

" न च तत्कार्यकरणे प्रवर्त्तमानं केनचिदाकारेण करोति

---

१. अतीतविकल्पजसंस्कारात् । २. अतीतविकल्पजसंस्कारेण सह भवता । ३ स्वहेतोः । ४. अतीतविकल्पजसंस्कारस्य । ५. वर्त्तमानानुभवजसंस्कारेण । ६. तस्यातीतविकल्पजसंस्कारस्य यन्निबन्धनमुपादानं, तस्य वर्त्तमानानुभवजसंस्कारकृतविशेषासिद्धेः । ७ तदभ्युपगमे च सामान्येन तन्निबन्धनस्य तत्कृतविशेषाभ्युपगमे च, तत्रापि–तन्निबन्धने, अयमेव–अनन्तरोदितः "न, उपादानकारणविशेषाधानमन्तरेण ततः कार्यविशेषासिद्धेः" इत्यादि वृत्तान्तः ।

केनचिन्न करोति, परस्य [illegible] ; ” इत्या-
द्यप्यसारम्, विरोधा[illegible]; तथाहि—[illegible] करोति,
द्रव्यात्मना[2] न करोति; कुत[illegible] इति।
अथवा[3] स्वकार्यैककर्तृत्वेन कर[illegible], कार्यान्तराकर्तृ[illegible] न करोति;
अतः केनचिदाकारेण कर[illegible] केनचिन्न [illegible]ति; कोऽत्र
विरोधः ? । न च स्वकार्यकर्तृ[illegible] कर्तृत्वम्;
यदि स्यात्, यथा स्वकार्यं करोति, [illegible] कार्यान्तरमपि कु-
र्यात्, कर्तृत्वानन्यत्वादकर्तृत्वस्य; विपर्ययो वा, ततश्चाकार-
णत्वम्, इति ॥

स्यादेतत्,—किं हि नाम कार्यान्तराकर्तृत्वमन्यत् ?
यदाऽऽश्रित्यानन्यत्व[illegible]कृत्यनुसारेणाकारणत्वं प्रतिपाद्यते; किन्तु
स्वकार्यैककर्तृत्वमेवैकस्वभावं कार्यान्तराकर्तृत्वम्, इति ।

हन्त, तर्हि ‘ येनैवाकारेण करोति, तेनैव न करोति ’
इत्येतदापन्नम् । एवं चाभिन्ननिमित्तत्वे सत्येकत्र कर्तृत्वाक-
र्तृत्वयोर्विरोधः, इ[illegible]; तथाहि—तेनैव स्वभावेन करोति, न
करोति च इति ? [illegible], एकस्वभावस्यैकत्रोपयोगात्[12]।

कार्यान्तराकर्तृत्वं तत्र[13] परिकल्[illegible]नम् इति चेत् ? तदप्यम-
नोहरम्, कार्यान्तराकर्तृत्वस्य तत्र[14] परिकल्पितत्वाद्-वस्तुतोऽ-
सत्त्वात्[15], तद्भावापत्त्या[16] कार्यान्तरकर्तृत्वप्रसङ्गात्[17] ॥

---

१. नैमित्तिकेन रूपेण तथा परिणतेः । २. मृदादिरूपेण तथाऽप-
रिणते. । ३. कार्यमधिकृत्योक्त्वा कारणमधिकृत्याह—। ४. एतदेकमेव ।
५. ‘तर्हि’ इति शेष । ६ यथा वा कार्यान्तर न करोति, एवं स्वकार्य-
मपि न कुर्यात् । ७. अकर्तृत्वानन्याकर्तृत्वस्य । अवचूरित्यु(त्य)
क्तम् (?) । ततश्चैवमनेनप्रकारेण ‘अकारणत्वम्’ इति कुर्वत कारणत्वायोगात् ।
८. अधिकृतकारणस्य । ९. नैव किञ्चिदन्यत् । १०. एव च तदे-
कमेव इत्यर्थः ११. स्वभावेन । १२. अन्यथा सर्वथैकत्वायोगः । १३.
कारणे । १४. कारणे । १५. कार्यान्तराकर्तृत्वस्याविद्यमानत्वात् । १६.
कार्यान्तरकर्तृभावापत्त्या। १७. न हि तद्भावमन्तरेण तदभावः, इति भावना ।

अथाशङ्का,—स्वकार्यकर्तृत्वव्यतिरिक्तं कार्यान्तराकर्तृत्वं परिकल्पितम्,स्वकार्यकर्तृत्वमेव पुनः कार्यान्तराकर्तृत्वस्वभावमभ्युपगम्यत एव, इति ।

एतदप्ययुक्तम्, दत्तोत्तरत्वात्; तथाहि—येनैव स्वभावेन करोति तेनैव न करोति;इत्येतदापन्नम् .इत्यादि तदेवावर्त्तते। अनेनैव "सर्वात्मना च करणे तद्भावरूपमेव स्याद्" इत्यादि प्रतिक्षिप्तम्, अभावस्य वस्तुधर्मत्वात् कथञ्चिदव्यतिरेकात् । कार्यान्तराकारणत्वाद्; इति । तस्माद् व्यवस्थितमेतत्सद्सद्रूपवस्तु; तथा चोक्तम्—

" यस्मात् प्रत्यक्षसंवेद्यं, कार्यतोऽप्यवगम्यते ।

तस्मादवश्यमेष्टव्यं, वस्त्वेक सदसदात्मकम् ॥१॥ "

इति ॥

अत्रान्यस्त्वाह—ननु च 'वस्तुनः स्वरूपेण सत्त्वम्, पररूपेण चासत्त्वम् इति, एतदिष्यत एव' इति सिद्धसाध्यता ॥

एतदप्ययुक्तम्; स्वमतविरोधात्; तथाहि—एवमिच्छता 'वस्तुन एव सत्त्वमसत्त्वं च धर्मौ' इत्येष्टव्यं, वक्तव्यंच,—धर्मधर्मिणोरन्यत्वमनन्यत्वमन्यानन्यत्वंच, इति । किं चातः ? यद्यन्यत्वम्,अवस्तुत्वादिप्रसङ्गः।कथम्?इह'वस्तुधर्मव्यतिरिक्तं स्वरूपेण सत्पररूपेण चासद्' इत्यभ्युपगमात् । धर्माणां च परत्वात्तद्रूपेणासत्त्वादवस्तुत्वप्रसङ्गः । एवं धर्माणामपि वस्तुव्यतिरिक्तत्वात्स्वरूपेण सत्त्वं पररूपेण चासत्त्वम्, इति धर्मा-

१. स्वकार्यकर्तृत्वव्यतिरिक्तत्वरूपेण कार्यान्तराकर्तृत्व परिकल्पित मुच्यते, स्वकार्यकर्तृत्वाव्यतिरिक्त त्वस्येव इत्यर्थ, इत्युक्तदोषाभावः; इति पराशय ।२. उक्तन्यायेन। ३. पूर्वपक्षप्रस्तावे परेणोक्त तदभावस्य . ४. वैशेषिकादिः । ५. उभयात्मकम्, इति भाव । ६. आदिपदाद धर्मधर्मिप्राप्तिपरिग्रहः । धर्मा अपि धर्मिणः प्राप्नुवान्ति,इति दोषः । ७ सदादिना धर्मरूपेण । ८. प्रस्तुतानाम । ९ . हेतोः ।

**न्तरप्राप्तिः; तत्राप्ययमेव न्यायः; इत्यनिष्ठा ॥**

**स्यादेतत्, न धर्माणां धर्मान्तरमिष्यते, अपि तु 'ते एव स्वरूपेण सन्ति, पररूपेण न सन्ति' इति; न तद्विलक्षणे सदसत्त्वे इति ।**

**एतदप्यसमीचीनम्, वस्तुन्यपि समानत्वात्, धर्माभावप्रसङ्गेनाऽभ्युपगमविरोधात्, 'तद्भावेऽपि तस्य' इति सम्बन्धानुपपत्तेः, समवायकल्पनायाः स्वधर्मेष्वपि तुल्यत्वात् ॥**

---

१. धर्मान्तरयोरपि। २. धर्माणाम... । ३. पूर्वोक्त एव । ४. निष्ठा परिसमाप्तिः, न निष्ठा, अनिष्ठा, अपरिसमाप्तिर्व्यवस्थेत्यर्थः । ५. वैशेषिकः । ६. धर्माः । ७. धर्मि । ८. अतो न धर्माणां धर्मान्तरप्राप्तिः, इति भावः; तथा हि–तदेव स्वरूपेण सत्, पररूपेण चासत्, इत्यपि वक्तुं शक्यत एव, अङ्गीकारेण चास्य पक्षस्य धर्माभावः । व्यतिरिक्तधर्माभावेऽपि तस्य वस्तुन एते 'धर्माः' इति सम्बन्धासिद्धेः । वस्त्वन्तरेण विशेषादित्यर्थः । ९. योऽपि व्यतिरिक्तैरपि धर्मैः सह धर्मिणः सम्बन्धोपपत्तये स्वसम्बन्धकस्वभावः समवायिसम्बन्धकस्वभावश्चेह प्रत्ययहेतुः समवायः पदार्थः कल्प्यते परैः, तस्यापि स्वसम्बन्धकस्वभावत्वादिभिः स्वधर्मैः सह व्यतिरिक्तेतरविकल्पे दोषाशनिरनिवारितप्रसरः। तथाहि,–यदि ते ततो व्यतिरिक्ताः, 'तस्य' इति कः सम्बन्धः? । अथाव्यतिरिक्ताः, तर्हि एकत्वम्, अधिकृतस्वभावानाम् एकस्मात्समवायादव्यतिरिक्तत्वात्, तत्स्वरूपवत्; अनेकत्वं वा समवायस्याधिकृतस्वभावाव्यतिरिक्तत्वात्,तत्स्वरूपवदेव, इति।समवायोऽपि स्वसम्बन्धस्वभावत्वसत्त्वादिषु धर्मेष्वनुपपद्यमानसम्बन्धः,कथमन्येषां धर्मिणां धर्मैः सह सम्बन्धमुपपादयितुमलम्?इत्यर्थः, तस्येति सम्बन्धानुपपत्त्या । १०. तथा च धर्मधर्मिव्यवस्थायोगः, अन्योऽन्यात्मकत्वेनेतरनिराकरणात् । तथाहि,—यदि धर्मिणोऽव्यतिरिक्ता धर्माः, ततो धर्मिमात्रं ते, तदव्यतिरिक्तत्वात्, तत्स्वरूपवत्, इति । न सन्त्येव 'धर्माः' इति इतरनिराकरणम्, एवं धर्मिणोऽपि वाच्यम्, धर्माव्यतिरेकादिति । अनिराकरणेऽपीतरस्य सदसत्त्वयोरेकत्वेनैकधर्म्यव्यतिरेकद्वारायातेन तद्वस्तु यथास्वरूपेण सत्, एवं पररूपेण स्यात्; धर्माव्यतिरेकाद् धर्मिण एवासत्त्वं भविष्यति, इत्याह–**असम्भवीति**।

अथानन्यत्वं, तयोरेकत्वप्रसङ्गः, एकस्माद्धर्मिणोऽनन्यत्वात्, तत्स्वात्मवत्; एवं च सति सदसत्त्वयोरभिन्नत्वात् यथा स्वरूपेण सत्, एवं पररूपेणापि स्याद्; इत्याद्युक्तम्। असम्भविनौ च निराधारौ धर्मौ सदसद्रूपौ ॥

तथाप्यानन्यत्वम्, अतोऽनेकान्तवादाभ्युपगमादेकान्तवादिनः स्वमतविरोधः; इत्यलं प्रसङ्गेन ॥

इति सदसदुभयरूपैकवस्तुवादः ॥

यच्चोक्तम्—" एतेन नित्यानित्यमपि प्रत्युक्तमवगन्तव्यं विरोधादेव " इत्यादि; एतदपि न सम्यक्, प्रमाणतस्तथा[1]-वगमात्; तथाहि—अध्यक्षेण नित्यानित्यमेव तदवगम्यते, अन्यथा[2] तदवगमाभावप्रसङ्गात्; तथा[3] च, यदि तत्राप्रच्युतानुत्पन्नस्थिरैकस्वभावं सर्वथा नित्यमभ्युपगम्यते; एवं तर्हि तद्विज्ञानजननस्वभावं[4] वा स्याद् ? अजननस्वभावं वा ? यद्याद्यः पक्षः, एवं सति सर्वत्र[5] सर्वदा सर्वेषां[6] तद्विज्ञानप्रसङ्गः[7], तस्यैकस्वभावत्वात्[8]; न चैतदेवं। क्वचित्कदाचित्कस्यचिदेव[9] तद्विज्ञानभावात्[10]। न[11] च 'सर्वथैकस्वभावस्य[12] देशादिकृतो विशेषः' इति कल्पना युज्यते[13], तद्भावेऽनित्यत्वप्रसङ्गात् 'सहकारिणमपेक्ष्य[14] जनयति[15]' इति चेत्? न, एकान्तनित्यस्यापेक्षायोगात्[16]; तथाहि—सहकारिणा तस्य[17] विशेषः क्रियते ? न वा ? इति वक्तव्यम्, यदि क्रियते; किमर्थान्तरभूतः ? अनर्थान्तरभूतो वा ? इति, यद्यर्थान्तरभूतः[18], तस्य[19] किमायातम् ? 'स[20] तस्य विशेषकारकः' इति चेत् ? न, अनवस्थाप्रसङ्गात्; तथाहि—स[21] विशेषस्ततो[22] भिन्नः ? अभिन्नो वा ?

---

१. नित्यानित्यप्रकारेण । २. एवमनभ्युपगमे । ३. भावयति । ४. वस्तु । ५. क्षेत्रे । ६. प्रमातृणाम् । ७. अधिकृतवस्तु । ८. वस्तुनः । ९. क्षेत्रकालादिभिर्विशेषाधानात् । १०. तस्मिन् वस्तुनि । ११. प्रकृतमेव समर्थयाते । १२ वस्तुनः । १३ न हि प्राक्स्वभावनिवृत्तिं विना वस्तुनो विशेष. । १४ आलोकादिकम् १५. वस्तुविज्ञानम् । १६. एकरूपतया । १७. वस्तुनः । १८. तत्तदवस्थमेव । १९. विशेषोऽर्थान्तरभूतः । २०. वस्तुनः । २१. मूलविशेषकृतः । २२. वस्तुनः ।

तदेवावर्त्तते, इत्यनवस्था, ( चक्रकं वा ) ।

अथानर्थान्तरभूतः, स विद्यमानः ? अविद्यमानो वा ? यदि विद्यमानः, कथं क्रियते ? करणे वाऽनवस्थाप्रसङ्गः ।

अथाविद्यमानः, व्याहतमेतत्, स ततोऽनर्थान्तरभूतोऽविद्यमानश्चेति, करणे वाऽनित्यतापत्तिरिति; तथाहि—तस्मिन् क्रियमाणे पदार्थ एव कृतः स्यात्, तदव्यतिरिक्तत्वात्तस्य । अथ माभूदेष दोषः, 'न क्रियते' इत्याश्रीयते, न तर्हि स तस्य सहकारी, अकिञ्चित्करत्वात्, भावे वाऽतिप्रसङ्गः, इति; तथाहि—यदि कञ्चन विशेषमकुर्वन्नपि स तस्य सहकार्यभ्युपगम्यते, सर्वभावानामेव तत्सहकारित्वप्रसङ्गः, तद्विशेषाकरणेनाविशेषात्, इति व्यर्था सहकारिकल्पना ॥

अथोच्यते—एवंभूत एव तस्य वस्तुनः स्वभावः, येनाकिञ्चित्कारकमपि प्रतिनियतमेव सहकारिणमपेक्ष्य कार्यं जनयति, इति ।

एतदपि मनोरथमात्रम्, विकल्पानुपपत्तेः; तद्धि यदाभीष्टसहकारिसन्निधौ कार्यं जनयति, तदाऽस्यानन्तरोदितसहकार्यपेक्षालक्षणः स्वभावो व्यावर्त्तते ? न वा ? इति वक्तव्यम् यदि व्यावर्त्तते, अनित्यत्वत्वप्रसङ्गः; स्वभावव्यावृत्तौ स्वभाववतोऽपि तदव्यतिरेकेण तद्वदेव निवृत्तेः । अथ न व्यावर्त्तते,

---

१. सहकारिणा विशेषः क्रियते । २. विद्यमानत्वाविशेषेण भूयोभूयः करणम्, इत्यनवस्था । ३. विद्यमानाव्यतिरिक्तो हि विद्यमान एव । ४. करणे वा व्यतिरिक्तस्याविद्यमानस्यानित्यतापत्तिर्वस्तुनः, तथाहि—तस्मिन् व्यतिरिक्ते विद्यमाने विशेषे क्रियमाणे पदार्थ एव कृतः स्यात् । ५. पदार्थं । ६. विशेषस्य । ७. सहकारिणो विशेषः । ८. आलोकादिकम् । ९. विज्ञानादि । १०, वस्तुनः । ११. अकिञ्चित्करसहकारि ।

कार्याजननप्रसङ्गः, तत्स्वभावानिवृत्तेः, पूर्ववत्; तथाहि—य एव तस्य कार्याजननावस्थायां स्वभावः, जननावस्थायामपि स एव, इति कथं जनयति? सर्वदा वा जननप्रसङ्गः; इत्येवं तावदेकान्तनित्यपक्षे विज्ञानादिकार्यायोगात् तदवगमाभावः, इति॥

अथ, अपि प्रकृत्यैकक्षणस्थितिधर्मकं एकान्तानित्यमभ्युपगम्यते? एवमपि विज्ञानादिकार्यायोगात् तदवगमाभाव एव। न च सर्वथैकक्षणस्थितिधर्मिणो विज्ञानादिजनकमुपपद्यते, तस्यैवायोगात्; तथाहि-क्षणस्थितिधर्मकं-क्षणस्थितिस्वभावमुच्यते, इति; अतोऽर्थादेवास्य द्वितीयादिष्वस्थितिः, इत्यकामेनापि प्रतिपत्तव्यम्, न्यायानुगतत्वात्; तयोश्च स्थित्यस्थित्योः परस्परतोऽन्यत्वम्? अनन्यत्वं वा? इति वाच्यम्॥

किं चातः?

यद्यन्यत्वं, किं सर्वथा? आहोश्वित् कथञ्चित्? यदि

---

१. आकिञ्चित्करसहकार्यपेक्षालक्षणस्वभावानिवृत्ते। २. दृष्टान्तः। ३. सर्वदा स्वस्वभावानिवृत्तेः। ४. कार्यम्-(शेषः)। ५. पूर्वमपि। ६. स्वभावाभेदात्। ७. तेन सहकारिणा सह जननस्वभावत्वात्। सहकारिभावे जनयति, सहकार्यभावाच्च न पूर्वमपि जनयति, इति चेत्? न, सहकारिणा सह कार्यजननस्वभावत्वस्यापि नित्यत्वे सति सदाकार्यजननप्रसङ्गात्; अन्यथा तस्य नित्यतानुपपत्तेः। तथाहि यदि सदा तेन सहकारिणा कार्यजननस्वभावं वस्तु, तर्हि सदा किं न जनयति कार्यम्? अजनयद्वा, कथं सदा तत्स्वभावं? ततश्च यदा कार्यं भवति, तदैव तज्जननस्वभावं, न तु सदा, इत्यवश्यमङ्गीकर्त्तव्यम्; अन्यथा, सहकारिणोऽपि सदाभावापत्तिः, सदा तेन सहकारिणा सह तज्जननस्वभावत्वाद्वस्तुनः। एवं स्वभावभेदे सति कथं वस्तुन एकान्तनित्यता? इति चिन्त्यम्। ८. एकान्तानित्यता। ९. वस्तुन एव। १०. तदभावभाविनो विज्ञानस्य तत्कार्यत्वासिद्धेः, अर्थस्यात्यन्तपरोक्षत्वात्।

सर्वथा, ततो द्वितीयादिक्षणेष्वपि स्थितिप्रसङ्गः, प्रथमक्षणस्थितेः द्वितीयादिक्षणस्थितिविभिन्नत्वान्यथानुपपत्तेः ; तथा हि,-अनन्तराक्रान्तविश्वानां भावानामस्थित्येकान्ताभिन्नया वर्त्तमानसमयभाविन्या स्थितिर्न विरुध्यते, इति;एवं द्वितीयादिक्षणास्थितेरपि वस्त्वन्तरत्वे तद्भावाविरोधः, इति भावना ॥

अथ कथञ्चिदन्यत्वम्, इति ? अतोऽनेकान्तवादापत्याऽभीष्टसिद्धिरेवास्माकमिति ॥

अथानन्यत्वम्, तदपि सर्वथा ? कथञ्चिद्वा ? इति कथनीयम्। यदि सर्वथा, प्रथमक्षणस्थितिरेव द्वितीयादिक्षणास्थितिः। सा च भावरूपा, ततश्च द्वितीयादिक्षणेष्वपि स्थितिरेव स्यात्। द्वितीयादिक्षणास्थितेर्वा निरुपाख्यत्वात्तदनन्यत्वेन प्रथमक्षणस्थितित्वात् प्रथमक्षणेऽप्यसत्त्वप्रसङ्गः। अथ कथञ्चिदनन्यत्वम्, इति ? पूर्वोक्तो दोषः। अथ द्वितीयादिक्षणास्थितेरभावरूपत्वान्न प्रथमक्षणस्थित्या अन्यानन्यत्वकल्पना युक्तिमती।

स्यादेतत्,-यदि अभावाद्विकल्पौ विहाय वर्त्तेत। अथ तदुत्तरकालभाविपदार्थान्तरस्थितिरेव विवक्षितस्य द्वितीयादिक्षणास्थितिरिति। हन्त ! तर्हि सुतरामन्यानन्यत्वकल्पनायाः प्रसरः, तथा च सति पूर्वोक्तदोषानतिवृत्तिरेव। अथ द्वितीयादिक्षणास्थितिः, परिकल्पितत्वान्न परिकल्पनीया,इति। एवं तर्हि तस्यापरिकल्पितत्वादसत्त्वाद्द्वितीयादिक्षणेष्वपि स्थितिः स्यात्। अथ प्रथमक्षणस्थितिर्व्यतिरि-

१ यथा हि-क्षणिकस्य घटादेः स्वकाले पटादिक्षणेन सह वस्त्वन्तरत्वान्न विरोधः। एवं द्वितीयक्षणभाविन्या स्थित्यापि सह प्रथमक्षणस्थितेर्न विरोध, अन्यत्वाविशेषात। ततश्च स्खलनाभावाद् द्वितीयेऽपि क्षणे प्रथमक्षणभाक् सत्त्व स्थितिमदनुषज्यते। २. क्षणास्थितौ ३. अनेकान्तवादापत्तिलक्षणः। ४. भावरूपया। ५. अन्यत्वानन्यत्वप्रकारौ मुक्त्वा प्रकारान्तरेण यदि वर्त्तेत ६. प्रथमक्षणात्। ७. यद्यन्यत्वम्, तदोत्तरकालपदार्थान्तरस्थितिक्षणेऽपि पूर्वकालभाविपदार्थक्षणस्थितिः प्रसक्ता। अथानन्यत्वम्, तदैकतरा कापि। ८ अन्यान्यत्वकल्पनारूपेण।

काद्वितीयादिक्षणास्थितिः परिकल्पिता, इति प्रथमक्षणस्थिति-रेवं[2]। तर्हि द्वितीयादिक्षणास्थितिरित्यत्र चोक्तो दोषः। अथ क्षणस्थितिधर्मकं वस्त्वेव द्वितीयादिक्षणास्थितिः, इति? न, तस्यै-वायोगात्; तथाहि-" क्षणस्थितिधर्मकं क्षणस्थितिस्वभावमु-च्यते " इत्यादि तदेवावर्तते, इति। अथोच्येत-द्वितीयादिक्ष-णास्थितौ सत्यां प्रथमक्षणस्थितेरभावात्, भावे वा तदनुप-पत्तेः, प्रतियोग्यभावादन्यानन्यत्वकल्पनाऽसम्भवतस्तदुक्त-दोषाभावः; तथाहि-द्वितीयादिक्षणे तदेव न भवति। नन्वेव-मपि तस्यैवास्थितत्वात् स्थितिवत् तदनवस्थितेस्तद्धर्मत्वप्र-सङ्गः, अतद्धर्मत्वे च तदा स्थित्यापत्तिः; तथाहि- द्विती-यक्षणे तस्यैव स्थितिरिति, ततश्च 'स्वहेतुभ्य एव स्थित्यन-वस्थितिधर्मकं समुत्पद्यते ' इति प्रतिपत्तव्यम्। न चाक्रमवतः कारणात् क्रमवद्धर्माध्यासितकार्योत्पत्तिर्युज्यते, इति। अतो

---

१. द्वितीयादिक्षणास्थितिः प्रथमक्षणास्थितिव्य.....वशेनैव परिकल्पि-ते त्युच्यते। २. प्रथमक्षणं च इति व्यतिरिक्तत्वात् भावेत्युक्तदोषाभावः, इति पराशयः। ३. अनन्यत्वपक्षोदितः। ४. अथैकस्मिन् वस्तुन्यन्यानन्यत्व-विकल्पमसम्भावयन्नेवमाह परः- । ५. एत...ये ..क्तम्। ६ प्रथमक्षणस्थितेः। ७. द्वितीयादिक्षणस्थितेः। ८. यदा द्वितीयादिक्षणास्थितिः, तदा प्रथम-क्षणस्थितेरभावः; यदि स्याद्भावः, तदा तस्या द्वितीयादिक्षणास्थितेरनु-पपत्तिः, तस्य प्रथमक्षणस्थितिभाक्तिनः पदार्थस्य सम्बन्धिनी असौ द्विती-यक्षणभाविनी अस्तु, इति कृत्वा ततश्च पक्षद्वयेऽपि प्रतियोगिनो द्वितीयस्याभावादन्यानन्यत्वविकल्पानुपपत्तिः। ९. यत्प्रथमक्षणेऽभूदिति। १०. सूरिः। ११. स्थितस्यैव। १२. वस्तु। १३. वस्तु। १४. अनवस्थित्यभावे अनवास्थितिकाले। १५. अनवस्थितिधर्मकत्वमेव वस्तुनो दर्शयति। १६. निरंशैकस्वभावत्वेन युगपत्क्रियाकारिणः।

यदैव स्थितिस्तदैवास्थितिः स्यात्, कुतः क्षणास्थितिधर्मकत्वम् इति। सत्यां वा स्थितौ, क्षणस्थायित्वे तया स्थित्या विरोधात्, प्रथमक्षणवत् सदा स्थितिप्रसङ्गः। न च 'निरंशतरंश-भावेभ्यो हेतुभ्यस्तत्स्वभावमेवोत्पद्यते,' इत्युच्यमानं विद्वज्जनसमवाये राजते, युक्तिवैकल्याद्, उभयत्र कारणे कार्ये च स्वभावान्तरकल्पनाया अपि शक्यत्वात्।

स्यादेतद्, अशक्या स्वभावान्तरकल्पना, अर्थक्रियाऽभाव-प्रसङ्गात्, इति।

एतदप्ययुक्तम्, क्षणस्थितिधर्मक एव वस्तुतस्त-द्भावप्रसङ्गात्; तथाहि—यथोक्तस्वभावं वस्त्वेवार्थक्रिया, यथोक्तम्—'भूतिर्येषां क्रिया सैव' इत्यादि,—तच्च न घटा-मटति, इति निदर्शितमेतद्, अलं विस्तरेणेति।

---

१. इदमुक्तं भवति, यदि द्वितीयादिक्षणे तदेव न भवति इति कोऽर्थः? क्षणनश्वरं वस्त्वभ्युपगम्यते, तदोक्तनीत्या 'यदैव स्थितिस्तदैवास्थितिः' इति, क्षणमात्रमपि वस्तुनः स्थितिर्न स्यात्। अथैवं वक्षि—यथा 'क्षणनश्वरं वस्त्वभ्युपगम्यते, तथा क्षणस्थाय्यपि, क्षणस्थायित्वे स्थितौ सत्यां सम्भवति,' इति 'यदैव स्थितिः तदैवास्थितिः' इति दोषाभावः, न, एवं सति यथा प्रथमक्षणस्थितिर्वस्तुनः, एवं द्वितीयादिक्षणेष्वपि सदा स्थितिः प्रसज्यते, तया स्थित्या सह द्वितीयादिक्षणानामप्यविरोधात्। २. प्रथमक्षणभाविन्या। ३. क्षणास्थितिधर्मक। ४ क्षणास्थितिधर्मकं-मेव कार्यम्। ५. 'नित्यस्वभावात् कारणान्नित्यस्वभावमेव कार्यमुत्पद्यते' इत्यस्याः। ६. नित्यस्वभावकल्पना। ७. नित्यं हि वस्तु अप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वान्नार्थक्रियां क्रमेण युगपद्वा कर्तुमलम्। ८. वस्तुनि। ९. अर्थक्रिया। १०. क्षणिकमृत्पिण्डादितः क्षणिकघटादेः सत्त्वा-भ्युपगमवादिनः।

क्षणिकाः सर्वसंस्काराः अस्थितानां कुतः क्रिया॥
भूतिर्येषां क्रिया सैव कारणं सैव चोच्यते॥ १॥

किं च—अत्रापि 'धर्मधर्मिणोर्नानात्वम् ? अनानात्वं च ?' इति वाच्यम् । यद्यनानात्वम्, किं सर्वथा ? उत कथंचिद् ? यदि सर्वथा, ततः स्थित्यस्थित्योरेकत्वम्, एकस्माद् धर्मिणोऽनानात्वात्, तत्स्वरूपवद् । एवं च स्थितिप्रसङ्गोऽस्थितिप्रसङ्गो वा; धर्मिणो वाऽभेदः, स्थित्यस्थित्योरनानात्वात्, तत्स्वात्मवदेव, तथा च-अन्यदेव स्थितिमद्, अन्यच्च तच्छून्यम्, इति कुतः क्षणस्थितिधर्मकत्वम् ? । अथ कथंचिद्, अभ्युपगमविरोधः । अथ नानात्वम्, तदपि सर्वथा ? कथंचिद्वा ? इति; यदि सर्वथा, हन्त ! तर्हि स्थित्यस्थितिस्वभावशून्यत्वात्स्वभावत्वात् कुतोऽमीष्टवस्तुस्थितिः ? । अथ कथंचिद्, अत्रोक्तो दोषः ।

स्यादेतत्, परिकल्पितो धर्मधर्मिभावः, न पुनर्वास्तवः, इति; एवमपि धर्मधर्मिणोः परिकल्पितत्वात्तच्छून्यताप्रसङ्गः, तदेवमपि कुतः क्षणस्थितिधर्मकत्वम् ? इति ।

तदितरव्यावृत्तिरूपाता धर्मा एव परिकल्पिताः, न धर्मी, इति चेत् ? एवमपि स्थित्यस्थित्यादिलक्षणपरिकल्पितधर्मव्यतिरिक्तस्य धर्मिणः किं स्वरूपम् ? इति वाच्यम् ।

क्षणस्थितिधर्मकत्वम् ? इति चेत्, न, तस्यैवायोगाद्, इत्यादि तदेवावर्तते; इत्यलं प्रसङ्गेन ॥

---

१. क्षणिकवादिमते । २. धर्मि । ३. वस्तुनः स्थितिर्वा स्याद् ? अस्थितिर्वा ? । ४. अभिन्नत्वात् । ५. वस्तु । ६. वस्तु । ७. स्थिति । ८. भेदः । ९. अतः । १०. क्षणस्थितिधर्मक । असत्त्वात् । ११. नश्वराद् व्यावृत्तोऽनश्वरः, तस्माच्च व्यावृत्तो नश्वरः, इत्यादि, व्यावृत्तिद्वारायातत्वान्नश्वरादयो धर्मा एवापारमार्थिका, एकस्वरूप वस्तु पुनः परमार्थसदेव ।

तदेषामिहापि विज्ञानादिकार्यायोगः, इति स्थितम् । नित्यं [ नित्यं ] पुनः कथञ्चिदवस्थितत्वादनेकस्वभावत्वाज्जनयतीति विज्ञानादिकमित्यतोऽवगम्यते, इति ।

नित्यानित्यत्वं च वस्तुनो द्रव्यपर्यायोभयरूपत्वादनुवृत्तव्यावृत्ताकारसंवेदनग्राह्यत्वात् प्रत्यक्षसिद्धमेव, तथाहि–मृत्पिण्डशिवकस्थासकघटकपालादिष्वविशेषेण सर्वत्रानुवृत्तो मृदन्वयः संवेद्यते, प्रतिभेदं च पर्यायव्यावृत्तिः; तथा च-न यथाप्रति[3]भासं मृत्पिण्डे संवेदनं तथाप्रतिभासमेव शिवकादिषु, आकारभेदानुभवात् । न च यथाप्रतिभासभेदं त[4]द्विजातीयेषूदकदहनपवनादिषु तथाप्रतिभासभेदमेव शिवकादिषु, मृदन्वयानुभवात् । न चास्य स्वसंवेद्यस्यापि संवेदनस्यापह्नवः कर्त्तुं युज्यते, प्रतीतिविरोधात् । न च निराकारं संवेदनमर्थान्तरस्येव, ततो विवक्षितार्थपरिच्छेदात् । न ह्यर्थाकारानुभवव्यतिरेकेणापरोऽर्थपरिच्छेदः, अतिप्रसङ्गात्, सर्वस्य सर्वार्थपरिच्छेत्तृत्वापत्तेश्च । न च[10] 'इदं संवेदनं भ्रान्तम्' इति शक्यते वक्तुम्, देशकालनरावस्थान्तरे विशेषेण प्रवृत्तेः; तथाहि–देशा[11]न्तरे कालान्तरे नरान्तरेऽवस्थानान्तरे च मृत्पिण्डादिषु यथोक्तसंवेदनं प्रवर्त्तते । न चार्थप्रभवमासंवादिसंवेदनं विहाय [12]जातिविकल्पेभ्यः पदार्थव्यवस्था युज्यते, प्रतीतिबाधितत्वेन तेषामनादेयत्वात् । न चैकान्तानित्येषु यथोक्त[13]-

---

१. द्रव्यरूपतया । २. नित्यानित्य वस्तु । ३. यथाकारम । ४. मृत्पिण्ड। ५.निराकार बोध...ममवे सवेदनमुच्यते । ननु साकारम, अतोऽनुवृत्तव्यावृत्ताकार सवेदनमसवेदनमेव, इति न वाच्यम्, इत्यर्थः । ६. निर्विषयस्येव विषयारूढस्यापि ततो निराकारात् सकाशात् परिच्छेदाभावात् । ७. एतद्भावयति । ८. अतिप्रसङ्गश्च तदाकारताभावे निर्विषयस्येव सविषयस्याप्यपरिच्छेदेन । ९. परिच्छेद्यवदपरिच्छेद्याकारशून्यत्वाविशेषाद्, इति हृदयम् । १०. अन्वयव्यतिरेकवत् । ११. ननु गगनावनतिमायोदकस्थाणुपुरुषशङ्खादिपातादिसंवेदनवद् देशान्तरादावन्यथारूपम्, इति।१२.व्यतिरिक्ताव्यतिरिक्तलक्षणेभ्यः। १३. अनुवृत्तव्यावृत्ताकार।

संवेदनसम्भवः; व्यावृत्ताकारनिबन्धनस्य पर्यायभेदस्याभावाद्; अन्यथा, एकान्तानित्यत्वानुपपत्तेः; तथा चोक्तम्—

भावेष्वेकान्तनित्येषु नान्वयव्यतिरेकवत्. ।
संवेदनं भवेद् धर्मभेदाभावादिह स्फुटम् ॥१॥ इत्यादि ।

तथा एकान्तनश्वरेष्वपि नाधिकृतसंवेदनभावो युज्यते, अनुवृत्ताकारनिबन्धनस्य द्रव्यस्यान्वयाभावात् । न च निरन्वयनश्वरवादिनः तदन्यप्रभवः सम्भवति, सर्वथा हेतुनिवृत्तावहेतुकत्वप्रसङ्गाद्; अन्यथा, अन्वयासिद्धेः, इति । उक्तं च—

" सर्वथा कारणोच्छेदाद्भवेत् कार्यमहेतुकम् ।
तच्छक्त्यन्वयवाधारस्वभावानामनन्वयात् ॥१॥ इत्यादि॥

नचाऽस्य संवेदनस्य बाधकः प्रत्ययोऽस्ति, कदाचिदप्यनुपलब्धेः। न च 'योगिप्रत्ययो बाधकः' इति युज्यते वक्तुम्, प्रमाणाभावाद् । उक्तं च—

क्षणिकं योगी विजानाति, न नित्यं चेति का प्रमा ? ।
देशनायां विनेयानुगुण्येनापि प्रवृत्तितः ॥१॥" इत्यादि॥

---

१. पर्यायभेदे सति । २ पर्यायभेदात् । ३.अन्वयव्यातिरेकवत् ।४. ततो निरन्वयनश्वराद्वस्तुनस्तत्सदृशस्यान्यप्रभव उत्पादः ५. मृत्पिण्डाद्यभावमाश्रित्य घटादेरुत्पादात् । ६. तत एव तद्भावे । ७. स्वभावाद् भावभूते । ८. तच्छक्तेः–कारणशक्तेः, अवयवाः–शक्तिशक्तिमतोरभेदात् कारणावयवा एव; तच्छक्त्यवयवाश्च ते आधारस्वभावाश्च, इति, प्रक्रमात् कार्यस्य, इति विग्रहः, तेषामन्वयादुच्छेदेन। ९. अन्वयव्यतिरेकवतः। १०. जातिविकल्पभावनाकालेऽपि अपास्ताशेषप्रपञ्च. । ११. योगिप्रत्ययाग्रहणाद्, इत्यर्थः । १२. न किंचित्प्रमाण तज्ज्ञानाग्रहणात् १३. 'देशना प्रमाणं भविष्यति' इति। एतदपोहायाह–भूतात्मनो द्वैताद्वैतदेशनावद्, ब्राह्मणस्य मृतजायामृतदेशनावच्चेति ।

तस्माद् 'अन्वयाविनाभूतो व्यतिरेकः, व्यतिरेकाविनाभूतश्चा-न्वयः, इति' वस्तुस्वभावः,तथा चोक्तम्—

"नान्वयः सहभेदित्वान्न भेदोऽन्वयवृत्तितः।
मृद्भेदद्वयसंसर्गवृत्तिजात्यन्तरं घटः ॥१॥" इत्यादि।

तस्माद् तद् यत एव नित्यम्, अत एवानित्यम्; द्रव्यात्मना नित्यत्वात्, तस्य चाभ्यन्तरीकृतपर्यायत्वात्। यत एव चानित्यम्,अत एव नित्यम्; पर्यायात्मनाऽनित्यत्वात्, तस्य चाभ्यन्तरीकृतद्रव्यत्वात्। उभयरूपस्य चानुभवसिद्धत्वात्। एकान्तभिन्नस्य चोभयस्याभावात्। उक्तं च—

द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः।
क्व कदा केन किंरूपा दृष्टा मानेन केन च ॥१॥"इत्यादि।

स्यादेतत्,-पर्यायनिवृत्तौ द्रव्यनिवृत्तिर्भवति किं वा न? इति। किं चातः?

यदि भवति, अनित्यमेव तत्, निवृत्तिमत्त्वात्, पर्यायस्वात्मवत्। अथ न भवति, हन्त!, तर्हि द्रव्यपर्याययोर्भेदप्रसङ्गः; तथाहि—पर्यायेभ्योऽन्यद्द्रव्यम्, तन्निवृत्तावपि तस्यानिवृत्तेः, क्रमेलकादिव कर्कः, इति। एतदप्ययुक्तम्, कथंचिन्निवृत्तिभावात्। अस्य चानुभवसिद्धत्वात्; तथाहि-

१. तद्गर्भत्वात्। २. तद्गर्भत्वात्

३.स घटो नान्वय एव कुतः?इत्याह–उद्धर्वादिरूपेण भेदित्वात्,एव न भेद एव,कुतः?अन्वयवृत्तितो मृद्रूपेण प्रवृत्तेः,किं तर्हि?अन्वयव्यतिरेकसम्बन्धवर्त्तमानं जात्यन्तरं घटः। ४. द्रव्यात्मनः। ५. द्रवति तांस्तान् पर्यायान् तद्भावपरिणामेन, इति; अन्यथा, द्रवणानुपपत्तिः, इति भावना। ६. पर्यायात्मनः। ७. अन्यथा, पर्ययणायोग; इति हृदयम्। ८. देशे। ९. प्रमात्रा। १०. इतरेतरवैकल्येन नीरूपतापत्तेः, इत्यर्थः। ११. प्रत्यक्षादिना। १२. पर्याय। १३.द्रव्यस्य। १४. *तन्निवृत्तत्वलक्षणेन...।

* तस्य द्रव्यस्य संबन्धी निवृत्त ........।

घटपर्यायनिवृत्तौ कपालकालेऽपि तद्[1]बुध्या मृदनुभूयत एव; तदेका[2]न्तनिवृत्तौ चोद्ध्वापि पर्यायवन्नानुभूयेत । 'ऊर्द्ध्वादि निवृत्ति[3]त एव भेदसिद्धिः' इति चेत्? न ऊर्द्ध्वादेरपि मृ[4]दः[5] सर्वथा भेदासिद्धेः । न चासौ कपालमृद् घटमृदः [6]सर्वथाऽन्यैव, त[7]दत्यन्तभेदे तस्या अमृत्त्वप्रसङ्गात्; यथोदकं न मृत्, त[8]तोऽत्यन्तभेदाद्; एवमसा[9][10]वपि स्या[11]त्, तस्याविशेषाद्, इति ।

स्यादेतद्–अ[12]मृत्स्वभावेभ्यो व्यावृत्तत्वात् कपाल पदार्थस्य मृत्स्वभावता, नोदकस्य, तेभ्यो व्यावृत्त्यभावाद्, इति ।

एतदप्यसमीक्षिताभिधानम्, व[13]स्तुनो सजातीयेतरव्यावृत्ताव्यावृत्तोभयस्वभावाप[14]त्तेः; तथाहि–अमृत्स्वभावेभ्य एवोदकादिभ्यो व्यावृत्तस्वभा[15]वः; एव स[16]ति कपालपदार्थः स्या[17]त्; न तु मृत्पिण्डशिवकादिभ्यो मृत्स्वभावे[18]भ्योऽपि, तद्व्यावृत्तावमृत्स्वभावत्वप्रसङ्गात्; यथैवामृत्स्वभावेभ्यो व्यावृत्त स[19] मृत्स्वभावो भवति, एवं मृत्स्वभावेभ्योऽपि व्यावृत्तोऽमृत्स्वभाव स्यात्, न्या[20]यानुगतमेतद्; अन्यथा, अमृत्स्वभावव्यावृत्तावपि मृत्स्वभावानुपपत्तेः ।

---

१. कपाल ।२. मृदा सहात्यन्तभेदः । ३. मन्निवृत्तौ...मूर्द्धादिपर्यायन्नानुभूयते, नहि मृन्निवृत्तावूर्द्ध्वादिपर्यायोऽनुभूयते । ४. मृदनिवृत्तावपि सत्यामूर्द्ध्वादिनिवृत्तित एव कारणादूर्द्धादे.....द्धिः, इति चेत् ? । ५. पर्याय ६ सकाशात्। ७. मृत्स्वरूपाननुविद्धयोर्द्धादिपर्यायानुपलम्भात् । घटमृदा सहात्यन्तभेदे ।

८. घटमृदः ९. कपालमृदः १०. घटमृदःकपालमृत् ११. अमृदेव ।

१२. उदकादिभ्य. । १३ नयुदकममृत्स्वभावेभ्यो व्यावृत्तम् । १४. अमृत्त्वादेव । १५.कपालमृदादेः । १६. मृत्स्वभावव्यावृत्त्यभ्युपगमे सति १७व्यावृत्तस्वभाव । १८. मृत्स्वभावेभ्योऽपि । १९. सन् । कपालपदार्थः। २०. न्यायश्च 'यो यत्स्वभावेभ्यो व्यावर्त्तते, नासौ तत्स्वभावो भवति-'

स्यादेतद्,-वस्तुनः सजातीयेतरव्यावृत्तस्वरूपत्वात् प्रतिनियतैकस्वभावत्वात्सर्वभावानां यथोक्तदोषाभावः, तथा च-यथैवासौ कपालभाव उदकादिभ्यो व्यावृत्तः सन् मृत्स्वभावः, एवं घटादिभ्योऽपि तस्यैकस्वभावत्वात्तेनैव रूपेण व्यावृत्तत्वाद्, इति।

एतदप्ययुक्तम्, अनुभवविरुद्धत्वात्; तथाहि-यदि, स येनैव स्वभावेनामृत्स्वभावेभ्यो व्यावृत्तः, तेनैव मृत्स्वभावेभ्योऽपि; हन्त! तर्हि, यथैवामृत्स्वभावभावैकान्तविभिन्नावभासहेतुः, तथैव मृत्स्वभावापेक्षयापि स्यात्; न च भवति, मृत्स्वभावस्यानुभूयमानत्वात् तस्यैव तथा परिणतिदर्शनात्; अनुभवस्य चापह्नोतुमशक्यत्वात् 'अनुभवप्रमाणकाश्च सन्तोऽर्थाधिगमे' इति। प्रतिनियतैकस्वभावानुभवनिबन्धनाभ्युपगमे च पर्यायतः समानपरिणाम एवाभ्युपगतः, इति न काचिन्नो बाधा। इत्यलं विस्तरेण।

तथैकान्तानिवृत्तौ तद्विलक्षणबुद्ध्यभाव एव, इति न स्यात्कपालबुद्धिः, विशेषाभावात्; तस्याप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वात्, इति। एतेन स्याद्वारेका-'नहि कूटस्थनित्यतया-'

---

इत्ययम्। १. अत एव। २. कपालादीनाम्। ३. अमृत्स्वभावव्यावृत्तावपि मृत्स्वभावत्वानुपपत्त्यवसानदोषाभाव। ४. व्यावृत्तो मृत्स्वभाव एव। ५. एकत्वभावेन। ६. कपालभाव। ७. उदकादिभ्यः। ८. हन्त इति विषादे। ९. नर्हि इत्यक्षमायाम्। १०. उदकादिभ्यः। ११. तदेकान्तविभिन्नावभासहेतुरेव। १२. कपाले। १३. शिष्टा अनुभवमेव प्रमाणं अर्थाधिगमविषये वदन्तीत्यर्थः। १४. ननु ज्वरादिशमनौषधानिदर्शनेन प्रतिनियतं मृत्पिण्डादिषु तथैकत्वस्वभावानुभवनिबन्धनं किञ्चिदिष्यत इत्येतदाशङ्क्याह-प्रतीतिप्रतिनियतं च तदेकस्वभावानुभवनिबन्धनं च तुल्यस्वभावानुकारणं चेति विग्रहः। १५. अत्र च वस्तुनि न किञ्चिदेकान्तेन निवर्तते, नापि तिष्ठति, तर्हि वस्त्वेकतत्तथाभवतीति प्रसिद्धमेतत, न चेह वस्तुनि किञ्चिन्निवर्ततेऽपि किञ्चित् अन्यथा दोषः, इत्याह-**एकान्तेत्यादि**। १६. घटविलक्षणबुद्ध्यभाव। १७. कपालबुद्ध्यभावहेतुर्विशेषाभावोऽपि तस्य घटवस्तुनः कुतः? इत्याह-**अप्रच्युतेत्यादि**।

इत्यादि यदाशङ्क्योक्तम्–'पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धिः' इत्यादि । तदपि प्रतिक्षिप्तमेवात्रगन्तव्यम्, कथंचिद्व्यतिरेकसिद्धेः; इति । तथाचोक्तम्–

" द्रव्यपर्याययोः सिद्धो भेदाभेदः प्रमाणतः ।
संवेदनं यतः सर्वमन्वयव्यतिरेकवत् ॥ १ ॥
स्वसंवेदनसिद्धे च विरोधोद्भावनं नृणाम् ।
व्यसनं धीजडत्वं वा प्रकाशयति केवलम् ॥२॥ इत्यादि

कृतं विस्तरेण ॥

इति नित्यत्वानित्यत्ववादः ॥ २ ॥

( ३ )

यच्चोक्तम्–" एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यम् " इत्यादि । तदप्ययुक्तम्, सामान्यविशेषरूपस्य वस्तुनोऽनुभवसिद्धत्वात्; तथाहि— घटादिषु 'घटो घटः' इति सामान्याकारा बुद्धिरुत्पद्यते, 'मार्तिकस्ताम्रो राजतः' इति विशेषाकारा च पटादिर्वा न भवति, इति । नार्थसद्भावोऽर्थसद्भावादेव निश्चीयते, सर्वसत्त्वानां सर्वज्ञत्वप्रसङ्गात् । सर्वार्थानामेव सद्भावस्याविशेषात् ।

किं तर्हि ?

अर्थविज्ञानसद्भावान्निश्चयः, ज्ञानं च सामान्यविशेषाकारमेवोपजायते । इत्यतोऽनुभवसिद्धत्वात्सामान्यविशेषरूपं वस्तुः इति । न च 'अयमनुभवो भ्रान्तः' इति युज्यते, घटादिसन्निधावविकलतदन्यकारणानां सर्वेषामेवाविशेषेणोपजायमानत्वात् ॥

---

१. भेदाभेद । २. 'घट' इत्येवंरूपोल्लेख । ३. कारणादेव । ४. कुतः प्रसङ्ग' इत्याह– । ५. भुवनोदरवर्त्तिनम् । ६. सर्वसद्भावस्य । ७. सति । ८. सम्पूर्णलोकादिकारणानामित्यर्थः । ९. प्रमातृणां सामान्येन भिक्षुपायकादीनामपि ।

स्यादेतद्-विकल्पो[1]यं 'घटो घटः इत्येतद्रूपप[2]रावृत्तवस्तुजन्यः, संकेतवासनोत्थोपि तस्थान्न वस्तुस्वरूपग्राही, तद्ग्राही तु सजातीयासजातीय व्यावृत्तवस्तुस्वलक्षणविषयत्वान्न यथोक्तप्रका[3]रः इत्यतो 'अनुभवसिद्धत्वाद्' इत्ययुक्तम् ।

न, निर्विकल्पकानुभवस्यापि तत्त्वतो यथोक्तप्रकारत्वात्, गृहीतग्राहित्वेन विकल्पस्य प्रामाण्यानभ्युपगमात्; अन्यथा, गृहीतग्राहित्वानुपपत्तेः; एकस्याकारभेदेनाप्रतिभासनात्, हेत्वयोगे[8]न च परपक्षे विकल्पाभावस्य प्रतिपादितत्वात् ...॥

किं च-यद्यसौ सजातीयासजातीयव्यावृत्तवस्तुस्वलक्षणप्रभवो निर्विकल्पकानुभवः; इति ।

अथ कस्मात्तत्पृष्ठभावी तत्सामर्थ्यजन्मा विजातीयभेदग्राहकविकल्पवत्[9]सर्वथा सजातीयभेदग्राहकविकल्पो न भवति ? न च भवति, तथानुभवाभावात्; तस्मात्समानासमानपरिणामविशिष्टवस्तुप्रभव एवासौ[10]वपि प्रतिपत्तव्यः, युक्तियुक्तत्वात् ।

---

१. 'घटो घट' इत्येवंरूपोल्लेख । २. एतस्य घटस्य यद्रूपं सजातीयासजातीयव्यावृत्तिलक्षणम्, तस्मात् परावृत्तं-निवृत्तं पराभिमतत्वेन वस्तु सामान्याख्यम्, तज्जन्य । ३. सामान्यविशेषाकारः । ४. सामान्यविशेषाकारत्वात् । ५. यदि निर्विकल्पकं सामान्यविशेषाकारं न स्यात्तदा सविकल्पकस्य यद् गृहीतं इत्येवंकारेण वा विशेषाकारा । ६. ग्राहित्वमभ्युपगम्यते तन्नोपपद्यते, यदि हि सामान्यविशेषौ निर्विकल्पेन गृहीतौ सविकल्पं गृह्णाति, तदैव तद्गृहीतग्राहित्वादप्रमाणं स्यात् । अथैकस्वभावाद् वस्तुतः सामान्यविशेषानिर्विकल्पोत्पत्तिरिति न वाच्यम्, यदि हि वस्त्वेकस्वभावं स्यात् तदा आकारभेदेन प्रतिभासभेदो न स्याद्, अविकल्प एवाकारभेदेन प्रतिभासते नाविकल्प इत्यपि न वाच्यम् । हेत्वयोगेन परपक्षे विकल्पस्यैवाभाव इति सत्त्वासत्त्वपरिच्छेदे सा कल्पना वस्तुनि समुत्पन्ने वेत्यादिविकल्पैरुक्तत्वात्, तस्मात्तत्त्वतः परमतेऽविकल्पस्यैव सामान्यविशेषात्मकत्वम् । ७. बौद्धमते । ८. हेत्वयोगश्च स्वलक्षणादनुत्पत्तेरित्यादिग्रन्थेन पूर्वमेवास्माभिर्विकल्पज्ञानाभावस्य प्रतिपादितत्वात् । ९. यथा निर्विकल्पाद्विजातीयपटादिभेदग्राहको विकल्पः स्याद् एवं सजातीयेभ्यो घटेभ्योऽपि भेदग्राहको घटविकल्पः कुतो न भवति ? १०. निर्विकल्पानुभव ।

स्यादेतत्— कुशलमायाकारविनिर्मितव्यापारविनियुक्तेषु सर्वथा विलक्षणस्वभावमायागोलकेषु विभिन्ननिर्विकल्पानुभवानुभूयमानेष्वपि विजातीयभेदग्राहकविकल्पवन्न सजातीयभेदग्राहकविकल्पसंभवो दृष्टः, सादृश्यात्, एवमिहापि भविष्यन्ति।

एतदप्यसारम्, सादृश्यस्य परिकल्पितत्वात्; परिकल्पितस्य च सजातीयभेदग्राहकविकल्पप्रभवाप्रतिबन्धकत्वात्; प्रतिबन्धकत्वे च विजातीयभेदग्राहकविकल्पोदयोऽपि न स्यात्; तस्य तैरपि सह सादृश्यस्य परिकल्पयितुं शक्यत्वात्; कल्पनायाः पुरुषेच्छामात्रनिबन्धनत्वात्; तदकारणात् तत्कार्यव्यावृत्त्यादिलक्षणस्य सादृश्यनिबन्धनस्य मिथोऽत्यन्तविलक्षणस्वभावसकलभाववादिनो वाङ्मात्रत्वात्; तथा हि—सजातीयासजातीयव्यावृत्त्या अविशेषेण विलक्षणत्वे सर्वभावानां कः केन समानकारणः? समानकार्यो वा? इति स्वदर्शनानुरागं परित्यज्य लोचने निमील्य चिन्त्यताम्, इति। असति च समानकारणत्वाद्यवतत्कारणात् तत्कार्यव्यावृत्तिरिति, कैषा वाचो युक्तिः? स्वकारणप्रभवश्च कार्यसाधकस्वरूपव्यतिरेकेण वस्तुनः सर्वभावानां सर्वभावेभ्य एवाविशेषेण व्यावृत्तत्वात्, इति। पर्याप्तं प्रसङ्गेन,

प्रकृतं प्रस्तुमः—

---

१. मायागोलकहिते भिन्नेनाभिन्नेनाविकल्पेनानुभूयमाना वर्तन्ते। २. गोलकेभ्यो विजातीयघटादय। ३. गोलकानामेव भेदग्राहि। ४. सादृश्यं हि वस्तुनोऽसत्त्वात् न सजातीयभेदग्राहकविकल्पोत्पत्तिं प्रतिबध्नाति, प्रतिबध्नाति चेद्विजातीयभेदग्राहकविकल्पोदयमिति प्रतिबध्नीयात। ५. सजातीयेन विविक्तैकस्वभावानामत्यन्तवैलक्षण्यस्य वस्तुत्वाङ्गीकारेण। ६. सादृश्यस्य। ७. परिकल्पितस्य। ८. विजातीयैरपि। ९. एकान्तवैलक्षण्याविशेषेऽपि यथा सजातीयं मिथः सादृश्यं भवद्भिः परिकल्पितमेव विजातीयैरपि सह तत् परिकल्पयितुं शक्यत एवेत्यर्थः। १०. सा मृत्कारणं यस्य स तत्कारणो घटो न तत्कारणोऽतत्कारण पटादिरेव तज्जलानयनादिकार्यं यस्य स तत्कार्यो घटो न तत्कार्यो तत्कार्यपटादिरेव, तद्व्यावृत्त्यादि, आदिपदा दनदाकार...घटादिषु सादृश्यस्य कारणं भण्यते न वाङ्मात्रमेव, वस्तुतः सर्वेषां भावानामविशेषणात्यन्तं विसदृशत्वाभ्युपगमात।

स्यादेतद्[1], असौ निर्विकल्पानुभवो विजातीयभेदग्रहणेऽभ्रान्तः[2], सजातीयभेदग्रहणे पुनर्भ्रान्तः, इति; अतस्तद्ग्राहकविकल्पासम्भवः[3], इति ।

एतदप्यसद्, एकस्य भ्रान्ताभ्रान्तत्वायोगात्, अभ्रान्तविशेषणानुपपत्तेश्च[4] ।

अथोच्येत–असौ[5] विजातीयभेदग्रहणे पटुः, इतरभेदग्रहणे[6] पुनरपटुः; पटवनुभवाहितसंस्कारप्रकोप[7]सामर्थ्यञ्च विजातीयभेदग्राहकविकल्पनिष्पादनायैवालम्, न, 'इतरभेद[8]ग्राहकविकल्पनिष्पादनाय' इत्येतदप्यनल्पस्य तमसो विजृम्भितम्; यतः–असा[9]वनुभवो येन स्वभावेन विजातीयभेदग्रहणे पटुः, किं तेनैवेतर[10]भेदग्रहणे पटुः? आहोस्विदन्येन?

किञ्चातः?

यदि तेनैव विजातीयभेदग्रहणवत्, तत एव सजातीयभेदग्रहणमप्यविकल्पं[11] स्याद्; विपर्ययो वा, तथा च सत्युभयत्र[12] पटुत्वेतरयोरविशेषवत्[13] तदनुभवाहितसंस्कारप्रकोपसामर्थ्यस्य तुल्यत्वात्[14], विजातीयभेदग्राहकविकल्पवदितरभेदग्राहकविकल्पोऽपि स्याद्; विपर्ययो वा, तदाहित[15]संस्कारस्य विकल्पनिबन्धनस्योभयत्र तुल्यत्वात् ।

---

१. अथ हे बौद्ध एव मन्यसे । २. निर्विकल्पानुभवेन हि सजातीयभेदो भेदश्चोभावपि भाव्येते । परं विजातीयभेदग्रहेऽभ्रान्त...तत्पृष्ठभाविनं विजातीयभेदग्राहकं विकल्पमुत्पादयति सजातीयभेदग्रहे तु भ्रान्त उत्पन्न इति । ..... विनं सजातीयभेदग्राहकं विकल्पं नोत्पादयतीति न पूर्वोक्तदोष । ३. सजातीयभेद । ४. प्रत्यक्षं कल्पनापोढमभ्रान्तमित्येवं यन्निर्विकल्पकमभ्रान्तत्वेन विशिष्यते तस्याघटना त्वया अभ्युपगमात् । ५. निर्विकल्पानुभव । ६. सजातीय । ७. उद्रेक । ८. सजातीय । ९. निर्विकल्प । १०. सजातीय । ११. स्वभावस्य । १२. विजातीयसजातीयभेदग्रहणयोः । १३. स्वभावस्यैकत्वात् । १४. सजातीयभेदा...सजातीयभेदस्य ग्रहणं स्यात् स्वभावस्यैकत्वात्...पटुत्वापटुत्वयोरविशेष ... एवं संस्कारसामर्थ्यस्यापि तुल्यत्वात् । १५. अनुभव ।

अथान्येनानुभवस्योभयस्वभावापत्तिः, तथा च सति स्वभावयोर्धर्मत्वादनुभवस्य च धर्मित्वान्मिथो भेदाभेदोभयविकल्पप्रभवो दोषोऽनिवार्यते, इति; मृग्यतां त्राणार्थमुपायः। परिकल्पितोभयस्वभावाभ्युपगमकवचोपायसद्भावात् प्रयासमात्रफलोऽभीष्टफलविकलो दोषाशनिः, इति चेत्? न, प्रचण्डवेगमहास्रोतःप्रवाहापह्रियमाणकुशकाशावलम्बनप्रायत्वादुपन्यस्तोपायस्य; तथाहि-परिकल्पितोभयस्वभावताभ्युपगमेन परमार्थतोऽसौ न विजातीयभेदग्रहणस्वभावो, नापि सजातीयभेदग्रहणापटुस्वभावः, इति। अतोऽनुभवस्य स्वभावरहितत्वादननुभवत्वप्रसङ्गः, इति। तदिदं 'पिशाचभयात् पितृवनाश्रयणमायातम्' इति धिग्, अहो दारुणं तमः।

अपरस्त्वाह—यथैवाक्रमवति सामान्यविशेषोभयस्वभावे वस्तुनि तथाविधक्षयोपशमाभावान्नावग्रहकाल एव भवतः, सतामपोहादिगोचराणां धर्माणामवगमः; अभ्युपगमे वा, गृहीत-

१. द्वितीयपक्षे। २. अभ्युपगम एव कवच। ३. निर्विकल्प। ४. हे जैन! तव मते। ५. अवग्रहणमवग्रहः, अनिर्देश्यसामान्यरूपमात्रार्थग्रहणमित्यर्थः। तथा ईहनमीहा, सद्भूतार्थपर्यालोचनरूपा चेष्टा ईहा, ईह चेष्टायामिति वचनात्। किमुक्तं स्यात्? अवग्रहादुत्तरकालमपा(वा)यात्पूर्वं सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थविशेषपरित्यागाभिमुखः। प्रायोऽत्र मधुरत्वादयः शाङ्खादिशब्दधर्मा दृश्यन्ते, न खरकर्कशनिष्ठुरतादयः शार्ङ्गादिशब्दधर्माः, इत्येवंरूपो मतिविशेष ईहेत्यर्थः। तथा तस्यैवावगृहीतस्येहितस्य चार्थस्य निर्णयरूपोऽध्यवसायो(वा)ऽपायः, एवं शाङ्ख एवायं शार्ङ्ग एवायमित्यादिरूपोऽवधारणात्मकः प्रत्ययोऽपाय इति भावः। तस्यैवार्थस्य निर्णीतस्य धरणं धारणा, सा च त्रिधा, अविच्युतिः, वासना, स्मृतिश्च। तत्र तदुपयोगादविच्यवनं अविच्युतिः, सा चान्तर्मुहूर्तप्रमाणा। ततस्तया आहितो यः संस्कारः, सा वासना सा च संख्येयमसंख्येयं वा कालं यावद्भवति, संख्येयवर्षायुषां संख्येयं कालमसंख्येयवर्षायुषामसंख्येयकालमिति भावार्थः, ततः कालान्तरे कुतश्चित्तादृशार्थदर्शनादिकात् कारणात् संस्कारस्य प्रबोधे यज्ज्ञानमुदयते तदेवेदं यन्मया प्रागुपलब्धमित्यादिरूपं सा स्मृतिः। एताश्चाविच्युतिवासनास्मृतयो धरणलक्षणसामान्यान्वर्थयोगाद्धारणाशब्दवाच्याः। अवग्रहादयोऽनेनैव क्रमेण स्युः तथाहि—नानवगृहीतमीह्यते, न चानीहितमवगम्यते, न चानवगतं धार्यते। ६. अ[illegible]।

ग्राहित्वेनेहादीनामप्रमाणत्वप्रसङ्गात्। तथाऽस्माकमप्यर्वाग्दृशां क्लिष्टचित्तत्वात् सतोऽपि सजातीयभेदस्य तदनवगमः; सकलरागादिवासनाकलङ्कविकलास्तु योगिनोऽवगच्छन्त्येव, इति।

एतदप्ययुक्तम्, ईहादिगोचराणां प्रायोऽवग्रहोत्तरकालं प्रमातृभिर्गृह्यमाणत्वात्, सजातीयभेदस्य च कस्यचित् कैश्चिदपि ग्रहणानुपपत्तेः 'योगिनो गृह्णन्ति' इत्येतदपि श्रद्धागम्यम्, प्रमाणाभावात्, इत्युक्तम्।

यच्चोक्तम्–"एकं सामान्यम्, अनेके विशेषाः;" इत्यादि,–तदप्ययुक्तम्, अनभ्युपगमात्। नहि यथोक्तस्वभावं सामान्यमभ्युपगम्यतेऽस्माभिः, युक्तिरहितत्वात्; तथाहि–तदेकादिस्वभावं सामान्यमनेकेषु दिग्देशसमयस्वभावभिन्नेषु विशेषेषु सर्वात्मना वा? देशेन वा वर्तेत? न तावत्सर्वात्मना, सामान्यानन्त्यप्रसङ्गाद्, विशेषाणामनन्तत्वात्, एकविशेषव्यतिरेकेण वान्येषां सामान्यशून्यतापत्तेः, आनन्त्ये चैकत्वविरोधात्। नापि देशेन, सदेशत्वप्रसङ्गात्। न च गगनवद् व्यापित्वाद् वर्तते, इति अकलङ्कन्यायानुसारि चेतोहरं वचः, अविचारितरमणीयत्वात्। कार्त्स्न्यदेशव्यतिरेकेण वृत्त्यदर्शनात्।

उभयव्यतिरेकेण नभसो वृत्तिः, इति चेत्? न, असिद्धत्वात्, नभसः सप्रदेशत्वाभ्युपगमात्। निःप्रदेशत्वे चानेकदोषप्रसङ्गात्: तथाहि–येन देशेन विन्ध्येन सह संयुक्तं नभः हिमवन्मन्दरादिभिरपि किं तेनैव? आहोस्विदन्येन? इति। यदि तेनैव, विन्ध्यहिमवदादीनामेकत्रावस्थानादिप्रसङ्गः, निःप्रदेशै-

---

१. अर्वाग्दर्शिनःकाले। २. यदाऽवग्रहविषयः सामस्त्येन स्युस्तदाऽवग्रहोत्तरकालमीहादिगोचरा गृह्यन्ते, यदा त्वेते सामस्त्येन न स्युस्तदा न गृह्यन्ते, अपि यतो दृश्यत एवेहाद्यभावेऽपि क्वचिदवग्रहमात्रम्। तथा निरवायेहानिर्धारणश्चावायस्तथा तदनुभवसिद्धं, इति व्यवच्छेदार्थं प्रायो ग्रहणम्। ३. एकमित्यनिरवयवं क्रियसर्वगरूपम्। ४. घटादिषु। ५. अन्येषां सामान्यशून्यतापरिहाराय सामान्यानामानन्त्येऽभ्युपगम्यमाने एकसामान्यमिति विरुध्यते,। ६. भावेषु। ७. अधिकरणसंगतिः। ८. जैन। ९. निःप्रदेशं च तदेकाकाशं च तेन सम्बन्धः।

काकाशसंयोगान्यथानुपपत्तेः। अथान्येन[1] आयातं तर्हि सदेशत्वमाकाशस्य।

स्यादेतद् अदेशत्वाद्[2] वियतो यथोक्तविकल्पासम्भवः, तत्रैकस्मिन्नेव ते[3]षामवस्थितत्वाद्।[4]

इदमप्ययुक्तम्, वस्तुतः पूर्वोक्त[5]दोषानतिवृत्तेः। न च सर्वव्यापिनो विन्ध्यादयः, इति; येन तस्मिन्नेव तेषामवस्थितत्वाद्, इति सफलं भवेद्, इति; यतो य[6]त्र विन्ध्यभावो यत्रा[7]भावः, इत्यनयोर्नभोभागयोरन्यत्वम्? अनन्यत्वं च? इति वाच्यम्।

किंचातः?।

यद्यन्यत्वम्, किं सर्वथा? आहोस्विद् कथंचित्? यदि सर्वथा, हन्त! तर्हि यत्र विन्ध्यभावस्तत्राप्यभावः स्यात्, तद्भाववत्, नभोभागाव्यतिरिक्तत्वात्, तद्भाववन्नभोभागस्य विपर्ययो वा। अथ कथंचिद्, अनेकान्तवादाभ्युपगमात् स्वकृतान्तप्रकोपः। अथान्यत्वम्, किं सर्वथा? उत कथंचित्? यदि सर्वथा, अन्यतमस्यानभोभागस्य(त्व)प्रसङ्गः, सर्वथा भेदान्यथानुपपत्तेः[11]। अथ कथंचित्, स्वदर्शनपरित्यागदोषः, इति।

स्यादेतद्, भागानभ्युपगमाद् व्योम्नो यथोक्तदोषानुपपत्तिः, इति।

अनभ्युपगममात्रभक्तो देवानांप्रियैः[12] सुखैधितो[13] नो[14]पपत्तिप्राप्तानपि भागानवगच्छति, इति। ननु[15] 'विशिष्टभावभावाभाव-

---

१. देशेन। २. निःप्रदेशे। ३. विन्ध्यादीनां। ४. विन्ध्याद्येकत्रावस्थानप्रसङ्ग। ५. पूर्वोक्तदोषानतिवृत्तिमेवान्यथा समर्थयन्नाह-न चेति। ६. देशे। ७. विन्ध्यभावयुक्त। ८. विन्ध्यभावयुक्तस्य नभोभागस्य। ९. यत्र भावस्तत्रापि भावप्राप्ति सिद्धान्त। १०. यत्र विन्ध्यभावो यत्राभाव इत्यनयोरेकस्य। ११. सर्वधर्मवैलक्षण्ये हि सर्वथा भेदस्तस्मिंश्च सत्येकस्य भावरूपताऽपरस्य चापिनेति अनभोभागत्वमेव भवतीति भावना। १२. मूर्खः, इत्यर्थः। १३. शास्त्रग्रहणे परिश्रमत्यागेन सुखवर्द्धित.। १४. विन्ध्यभावाभावाभ्यां। १५. एतद्भावनार्थैवाह। १६. विशिष्टभावोऽन्यत्र यत्र तथा विन्ध्यभाव एव तस्य सत्त्वासत्त्वाभ्यां।

गम्या एव भागाः' इत्यवगमे निवेश्यतां चित्तम्, इति। अलं प्रसङ्गेन।

एतेन नित्यव्यापि (०त्यनिरवयवाऽक्रिययाप्य०) निर्देशा सामान्यवृत्तिरपि प्रत्युक्ता

आह-अनुभवसिद्धत्वात् सामान्यस्य न युज्यते सहृदय-तार्किकस्य तत्प्रतिक्षेपेणात्मानमायासयितुम्, आयासस्य निष्फलत्वात्; तथाहि-यदि 'सनातनं-वस्तुसत्-व्यापि-एकम्-अनवयवं' सामान्यवस्तु न स्यात्, न तदा देशकालस्वभाव-भेदभिन्नेषु घटाशरावो(°ष्टिकोदञ्चनादि°)दञ्चनालिन्जराविषु(?) विशेषेषु सर्वत्र 'मृद्, मृद्,' इत्यभिन्नौ बुद्धिशब्दौ स्याताम्। न खलु हिमतुषारकरकोदकाङ्गारमुर्मुरज्वालानलझञ्झामण्डलि-कोत्कलिकापवनखदिरोदुम्बरिकादिषु अत्यन्तभिन्नेषु बहुषु विशेषेष्वेकाकारा बुद्धिर्भवति, नाप्येकाकारः शब्दः प्रवर्तते, इति, अतोऽस्य यथोक्ताभिन्नबुद्धिशब्दद्वयप्रवृत्तिनिबन्धनस्य वस्तुमतः सामान्यस्य सत्त्वमाश्रयितव्यम्, इति।

अत्रोच्यते- न खल्वस्माभिर्यथोक्तबुद्धिशब्दद्वयप्रवृत्तिनि-बन्धनं निषिध्यते।

किं तर्हि?।

एकादिधर्मयुक्तं परपरिकल्पितं सामान्यम्, इति। तच्च यथा विशेषवृत्त्ययोगेन न घटां प्राञ्चति, तथा निदर्शितमेव।

आह-किं पुनर्न यथोक्तबुद्धिशब्दद्वयप्रवृत्तिनिबन्धनम्, इति।

---

१. नहि निर्भागे परमाणौ कार्यस्य अणुकस्य क्वचिद्भाव इत्यभिमत स्वद-र्शनस्थित्याऽप्यवगमे निवेश्यतां चित्तम्। २. एकसामान्यवृत्तिनिराकरणेन। ३. नित्यस्यैकस्वभावतया कालभिन्नासु व्यक्तिषु वृत्त्ययोगः। व्यापिन सर्व-गतत्वेन निर्देशस्य देशाभावेनेति भावनीयम्। ४. विशेषेषु। ५ नित्यं। ६. परमार्थसत। ७. विरलाग्निकणा मुर्मुर ८. मूलाग्निविच्छिन्नज्वाला। ९. जातिभेदापेक्षया। १०. मृदमृदित्यादि। ११. मृद्मृदित्यादिरूपतया।

उच्यते-अनेकधर्मात्मकस्य वस्तुनः समानपरिणामः, इति। न चात्र सामान्यवृत्तिपरीक्षोपन्यस्तविकल्पयुगलकप्रभवदोष-सम्भवः, समानपरिणामस्य तद्विलक्षणत्वात्, तुल्यपरिच्छेद्य-वस्तुरूपस्य समानपरिणामत्वात्; अस्यैव च सामान्यभावोप-पत्तेः, 'समानानां भावः सामान्यम् इति, यैस्समानैस्तथा भूयते' इत्यन्वर्थयोगात्, अर्थान्तरभूतभावस्य तद्व्यतिरेकेणापि तत्स-मानत्वेऽनुपयोगाद्, अन्यथा, 'समानानाम्' इत्यभिधाना-भावादयुक्तैव तत्कल्पना। समानत्वं च भेदाविनाभाव्येव, तद-भावे च सर्वथैकत्वतः समानत्वानुपपत्तिः, इति समानपरिणाम एव समानबुद्धिशब्दद्वयप्रवृत्तिनिमित्तम्। यतश्चैवम् अतो न य एवासावेकस्मिन् विशेषे, स एव विशेषान्तरे।

किं तर्हि ?

समानः, इति; कुतः सामान्यविचारोदितभेदद्वयसमुत्था-परोधावकाशः? इति। न चैवं सति परस्परविलक्षणत्वाद् विशेषाणां समानबुद्धिशब्दद्वयप्रवृत्त्यभावः, सत्यपि वैलक्षण्ये समानपरिणामसामर्थ्यतः प्रवृत्तेः। असमानपरिणामनिबन्धना

---

१. सत्त्वज्ञेयत्वादि। २. घटशरावादे। ३. मृन्मादित्यभिन्नबुद्धिशब्दद्वय-प्रवर्त्तक। ४. समानपरिणामे। ५. देशकालस्वभावान्तर–सामान्यानन्त्यादाना। ६. एकादिधर्मकसामान्याद्विलक्षणत्वात। ७. वैलक्षण्यमेवाह। ८. समानपरि-णामस्य। ९. उपपत्तिरपि कुत? इत्याह-समानानामिति। १०. यैरिति क्रिया-विशेषणं। ११. समानैस्तथाभूयते इत्यनेन समानानामित्यत्र कर्त्तरि षष्ठीतिज्ञा-पितम्। १२. समानतया। १३. ...मन्वर्थं समानानामिति सम्बन्धषष्ठी-न परस्य पक्षे ..त्यर्थः। १४. सम्बन्धपक्षे समानाना सम्बन्धिन तेषां समानानां समानत्वे प्रकृत्यैवेति भाव। १५. अन्तरेणैव ते समाना इति कृत्वा। १६. अन्यथाभ्युपगमे, अन्तरेण प्रकृत्या तदसमानत्वे समाना-नामित्यभिधानाभावात्। १७. अधिकृतभावकल्पनासमानानां भाव इत्येतत्स-म्बन्धिना समानानामितिकृत्वा। १८ तुल्यत्वं। १९. अयं अनन्यसमान इति नीते। २०. भेदाभाव। २१. समानपरिणाम। २२. घटादौ। २३. शरावादौ। २४. देशकालस्वे। २५. घटेशरावादि। २६. घटशरावादीनाम्। २७. हिमा-ङ्गारादीनामिव। २८. व्यतिरेकमाह-।

च विशेषबुद्धिरिह। इति यथोदितबुद्धिशब्दप्रवृत्तिः इति। तथा चोक्तम्—

"वस्तुत एव समानः परिणामो यः स एव सामान्यम्।
असमानस्तु विशेषो वस्त्वेवमनेकरूपं तु ॥ १ ॥"

ततश्च तद्यत एव सामान्यरूपम्, अत एव विशेषरूपम्, समानपरिणामस्यासमानपरिणामाविनाभूतत्वात्। यत एव विशेषरूपम् अत एव सामान्यरूपम् समानस्यापि समानपरिणामविनाभूतत्वाद्, इति। न चानयोर्विरोधः, समानासमानपरिणामयोरुभयोरपि स्वसंवेदनस्योभयरूपत्वाद्; उभयरूपतायाश्च व्यवस्थापितत्वात्॥

यच्चोक्तम्–" सामान्यविशेषरूपत्वे सति वस्तुनः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्गः" इत्यादि,–तदपि जिनमतानभिज्ञतासूचकमेव केवलं, न पुनरिष्टार्थप्रसाधकम्, इति। न हि 'मधुरकलड्डुकादिविशेषानर्थान्तरम्–सर्वथैकस्वभावम्–एकम्–अनवयवं सामान्यम्' इत्यभिदधति जैनाः। अतः किमुच्यते? "न विषं विषमेव, मोदकाद्यभिन्नसामान्याव्यतिरेकाद्" इत्यादि–।

किं तर्हि?।

समानपरिणामः, स च भेदाविनाभूतत्वात्। न य एव विषादभिन्नः स एव मोदकादिभ्योऽपि, सर्वथा तदेकत्वे समानत्वायोगात्।

स्यादेतत्, समानपरिणामस्यापि प्रतिविशेषमन्यत्वादसमानपरिणामवत् तद्भावानुपपत्तिः, इति।

---

१. घटादि। २. मृदादि। ३. ऊर्ध्वत्वादि। ४. सामान्यविशेषोभयरूपम्। ५. मृदाद्यात्मतया। ६. ऊर्ध्वादिरूपापेक्षया। ७. समानासमानयोः परिणाम। ८. वस्त्वनुपपत्तिरूप इष्टोऽर्थः। ९. विष। १०. सामान्यमित्याहुर्जैनाः। ११. घटशरावादि। १२ यथाऽसमानपरिणामस्य समानपरिणामभावानुपपत्तिरेवं समानपरिणामस्य समानपरिणामानुपपत्तिः। उभयोरप्यन्यत्वाविशेषात्।

एतदप्ययुक्तम्, सत्यपि[1] अन्यत्वे समानाऽसमानपरिणामयोर्भिन्नस्वभावत्वात्; तथाहि-समानाधिषणाध्वनिनिबन्धनस्वभावः समानपरिणामः[2], तथा विशिष्टबुद्ध्यऽभिधानजननस्वभावस्त्वितरः, इति यथोक्तसंवेदनाभिधानसंवेद्याभिधया[3] एव विषादयः, इति प्रतीतमेतत्[4]; अन्यथा यथोक्तसंवेदनाद्यभावप्रसङ्गात्[5]। अतो यद्यपि द्वयमप्युभयरूपं[6] तथापि विषार्थी विष एव प्रवर्त्तते, तद्विशेषपरिणामस्यैव तत्समानपरिणामाविनाभूतत्वात्, न तु मोदके, तत्[10]समानपरिणामाविनाभावाभावात् तद्वि[11]शेषपरिणामस्य, इति। अतः प्रयासमात्रफला प्रवृत्तिनियमोच्छेदन्वोदनैव, इति।

एतेन[12] "विषे भक्षिते मोदकोऽपि भक्षितः स्यात्" इत्याद्यपि प्रतिक्षिप्तमवगन्तव्यम्, तुल्ययोगक्षेमत्वात्, इति।

यच्चापरेणाप्युक्तम्-"सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः" इत्यादि-तदपि कूटनटनृत्तमिवाभावितानुष्ठानं[13] न विदुषां मनोहरम्, इत्यपकर्णयितव्यम्, वस्तुतः प्रदत्तोत्तरत्वात्, इति। अलं विस्तरेण[14] वचसाम् ॥ ३ ॥

इति सामान्यविशेषोभयरूपैकवस्तुवादः ॥ ३ ॥

( ४ )

यच्चोक्तम् "एवमभिलाप्यानभिलाप्यमपि विरोधबाधित-

---

१. परिणामस्य। २. यत खलु शरावादिषु मृन्मादिव्यविशेषेण भवता धीध्वना। स समानपरिणाम। यत खलु घटादिष्वेव घट शरावमित्यादिविशेषेण भवता धीध्वान स त्वितरः। ३. सामान्यविशेषरूप। ४. तथा हि सत् सदिति विषादय संवेद्यन्तेऽभिधीयन्ते च, तथा विष मोदक इत्येवं चेति प्रतीतमिदम्। ५. आदिपदादभिधानम्। ६. विषं मोदकश्च। ७. सामान्यविशेषरूपम्। ८. विष। ९. विष। १०. मोदक। ११. विष। १२. पूर्वोदितेन ग्रन्थेन। १३. जैनदर्शनभावार्थपरिणामशून्यत्वेन। १४. अत्रान्य ज्ञापकश्लोका - समानेतरबुद्धिश्चेत्यादिरूपा दश

इति सामान्यविशेषोभयवस्तुवादटिप्पनकम् ॥ ३ ॥

त्वादेवानुद्बोध्यम् " इत्यादि,-तदप्ययुक्तम् ; अन्यथा, व्यवहारोच्छेदप्रसङ्गात् । तथाहि एकान्तेनैवानभिलाप्यमभ्युपगम्यते, कथं तर्हि शब्दविशेषादर्थविशेषप्रतीत्यादिः ? दृश्यते च 'अग्नावानय ' इत्युक्ते विनीतानां धूमध्वजादौ प्रवृत्तिः ।

स्यादेतद् , असौ शब्दाद्विकल्पं प्रतिपद्यते, तस्माच्च दृश्यविकल्पेऽर्थौ(०पार्थौ०)वेकीकृत्य प्रवर्त्तते । न पुनः शब्दादेव, अप्रतिपन्नविकल्पस्य कस्यचित्प्रवृत्त्यदर्शनात् । सङ्केतवशाच्च शाब्दादर्थे प्रवृत्तिः, तस्य च विकल्पमन्तरेणान्यत्र कर्तुमशक्यत्वाद् , इतिः इतीत्थमेवेदमङ्गीकर्त्तव्यम , इति ।

एतदप्ययुक्तम . विकल्पप्रतिपत्तावपि दृश्यविकल्प्यार्थैकीकरणाभावतः, प्रवृत्त्ययोगाद् , एकीकरणाभावश्च दृश्यविकल्प्यार्थयोरत्यन्तभेदवादिनः कथंचिदपि समानत्वानुपपत्तेः, एकस्य चोभयानुभवितुरभावात् ।

किं च-स खल्वेकीकुर्वन् तदा द्वयमपि भेदेन प्रतिपद्यैकीकुर्याद् ? अप्रतिपद्य वा ?। यद्याद्यः पक्षः, तेनो भेदेनैवोभय-

---

१. विरोधासिद्धेस्तदर्भिलाप्यानभिलाप्यस्यैव प्रमाणसिद्धत्वात् तथैवार्थक्रियोपलब्धेरिति शेषः । २. अभिलाप्यानभिलाप्यतां विहाय । ३. आदिशब्दात्प्रवृत्तितत्समास दर्नानिवेदनपरिग्रह । ४. तथाविधक्षयोपशमयुक्तानां । ५. अन्यापोहाभिधायका शब्दा इति कृत्वा शब्दादन्यापोहमन्याभाव· प्रतिपद्यते । ६. अन्याभावबोधात । ७. स्वलक्षणसामान्यलक्षणौ । ८. ननु शब्दाद्वस्त्वेव प्रतिपद्य प्रवर्त्तते । ९. विशेषमाह । १०. बौद्धः । ११. अपोहम् । १२. विशेषे १३. अशक्यत्वञ्च विशेषे सङ्केतस्य वस्तूनामानन्त्यात प्रतिवस्तु समवायकरणेन व्यवहारानुपयोगात् सङ्केतस्य । १४. विकल्पविषय एव शब्दः, इति शब्दात् । १५. स्वलक्षणविकल्पाधिरूढ सामान्यरूप । १६. दृश्ये । १७. सत्स्तव । १८. साधर्म्यं चैकीकरणनिमित्तं । १९. समानत्वं सदपि उभयोः समानयोर्ग्रहणे गृह्यते न च तयोरेक कश्चिद् ग्रहीताऽभ्युपगम्यते परैः । २०. दृश्यविकल्प्यार्थद्वयम् । २१. ज्ञात्वा । २२. असङ्कीर्णत्वेन ।

प्रतिपत्तेः किमेकीकरणेन ?। अथापरः, इति, अप्रतिपन्नयोरप्येकीकरणमयुक्तम्, अतिप्रसङ्गात्; तथाहि–अप्रतिपन्नेनापि विवक्षितेनैव दृश्येनैकीकरोति, न दृश्यान्तरेण, इति किमत्र नियामकम् ?।

स्यादेतद्, असौ तत्समानजातीयदृश्यसंवेदनाहितवासनाप्रकोपप्रबोधितस्वबीजजन्मा विकल्पः, इति; अतो 'न दृश्यान्तरेण' इत्येतदप्यसङ्गतम्, दृश्यसंवेदनाहितवासनाप्रकोपस्य तत्प्रबोधाक्षमत्वाद्, इति।

एतदावेदितं प्राग्, अतो नेह प्रयत्नः, इति; अलं विस्तरेण॥

यच्चोक्तम्–"सङ्केतवशाच्च शब्दात्प्रवृत्तिः, तस्य च विकल्पमन्तरेणान्यत्र कर्तुमशक्यत्वात्" इति; एतदघटमानकम्, विकल्पेऽपि सङ्केतस्य कर्तुमशक्यत्वात्, तस्याप्युत्पत्तिः, अनन्तरापवर्गित्वात्; तथाहि–तस्मिन्नपि सङ्केतविधिरनुत्पन्ने वा क्रियते? उत्पन्ने वा? विनष्टे वा? इति विकल्पाः। न तावदनुत्पन्ने, असत्त्वात्। नाप्युत्पन्ने, तस्योत्पादसमनन्तरमेवापगमात्; क्षणस्थितिधर्मणि च सङ्केतस्य कर्तुमशक्यत्वात्। नापि विनष्टे, विनष्टस्यासत्त्वात्।

---

१. योजनाभावात् किञ्चिदित्यर्थः। २. अप्रतिपन्नावेकीकुर्यादित्ययं पक्षः। ३. भेदेनागृहीतयोः। ४. भेदेनागृहीतत्वेऽपि। ५. घटेन। ६. विकल्पमर्थं घटादिस्वलक्षणेन। ७. अप्रतिपन्नत्वाविशेषात्। ८. तस्य तदानीं प्रवृत्तिविषयस्य। घटस्वलक्षणस्य यः समानजातीयो दृश्यो घटस्वलक्षणान्तरं तस्य सङ्केतग्रहणादिकाले संवेदनं तेन आहितः संस्कारविशेषस्तेनोद्बोधितविकल्पस्य यत् स्वं बीजं शब्दज्ञानं तज्जन्मा। ९. ननु घटादिस्वलक्षणेनैकीकरोति। १०. विकल्प। ११. सत्त्वासत्त्वाधिकारे स्वलक्षणानुभवाहितसंस्कारेण तज्जन्मेति चेत्, न, संस्कारस्यापि स्वलक्षणेतरस्वानतिरिक्तत्वादिना निवेदितम्। १२. अशोक। १३. स्वलक्षणेऽपि विकल्पो द्विधा, स च त्रिधा एकस्तावद्व्यावृत्तम् स्वलक्षणमेव, अन्यापोहस्वरूपं द्वितीयम्, विकल्पबुद्धिप्रतिभासस्तु तृतीयः, तत्र प्रथमपक्षाश्रयणाह–विकल्पेऽपीत्यादि। १४. स्वलक्षणरूपविकल्पस्य। १५. विनाशित्वात्।

स्यादेतद्, यदविकल्पेभ्यावृत्तं विकल्परूपं सकलविकल्पसाधारणम्, तत्र सङ्केतः, इति।

एतदपि असमीक्षिताभिधानम्, सकलविकल्पसाधारणस्यासत्त्वाद् अविकल्पेभ्य इव सर्वथा सर्वविकल्पानामेवं मिथोऽपि व्यावृत्तेः। न च 'अन्येन स्वभावेन विजातीयेभ्यो व्यावृत्तः, अन्येन च सजातीयेभ्य' इति वक्तुं युज्यते, अनेकधर्मात्मकवस्तुप्रसङ्गाद् इति।

स्यादेवम् शब्दो हि विकल्पजन्मा विकल्पहेतुश्च वर्त्तते उक्तं च—

"विकल्पयोनयः शब्दाः, विकल्पाः शब्दयोनयः"

इति। ततश्चासौ शब्दो यथाभूतादेव वक्तृविकल्पादुत्पद्यते तथाभूतस्यैव श्रोतृविकल्पस्य जनकः, इति, एतावतांशेन तत्र सङ्केतः, इति प्रतिपाद्यते, न पुनः शृङ्गं ग्राहिकया क्रियते। तथा च-तैमिरिकद्वयद्विचन्द्रप्रतिपादनं न्याय एवावितथशब्दार्थव्यवहाराङ्गैरनल्पधीधनैः प्रतिपादितः। उक्तं च—

रूपान्तरं विकल्पे यदुभयोः प्रतिभासते।
सत्यर्थं तत्र सङ्केतः एकत्वाध्यवसायतः॥ १॥

---

१. अन्यत्यवच्छेद . कृत्वाह। २. निर्विकल्प। ३. उक्तश्च **धर्मकीर्त्तिना**—अर्थाना घटादीनां यच्च सामान्यमन्यव्यावृत्तिलक्षण, यन्निष्ठश्च इमे शब्दास्तस्य रूपं न किञ्चनेति, निःस्वभावत्वसिद्धिस्तुच्छत्वसिद्धिरसत्त्वासिद्धिरिति यावत्। ४. ...सर्वेऽपि विकल्पा अविकल्पेभ्योऽन्यव्यावृत्ता एवं मिथोऽपि, सोऽपि हि स्वलक्षणानि सजातीयविजातीयव्यावृत्तानीति कृत्वा विजातीयेभ्यो विकल्पेभ्य। ५. विकल्पेभ्य! ६. विकल्पोऽपि स्वभावत्ता वस्तु। ७. अथैवं मन्यसे। ८. विकल्पबुद्धिप्रतिभासपक्षेत्याह—जन . विकल्पकारण ९. घटाद्यपोहप्रतिभासिन। १०. बीजाङ्कुरन्याया। ११. पृच्छति। १२. स्वलक्षणादन्यत सामान्यलक्षणाख्यम्। १३. वक्तृश्रोत्रो। १४. सति विद्यमानेऽर्थेऽपोहाश्रये स्वलक्षणे इत्यर्थः। १५. तत्र सङ्केत...न्यसङ्केत्य इत्यर्थ। १६. कस्मात्—**एकत्वाध्यवसायतः**।

याद्दशाद्यः समुत्पन्नः स भवत्येव कारणं ।
ताद्दग्विधविकल्पस्य ध्वनिः सङ्केतसंस्थितिः ॥२॥
किमेतदिति सङ्केत्य इतरोप्येवमित्यदः ।
न कल्पयति यावद्धीस्तावन्न समयोद्भवः ॥३॥
वक्तुः श्रोतुश्च तुल्यामे बुद्धी तेनैकगोचरे ।
तत्त्वेन बहिरर्थोऽस्ति न कश्चिच्छब्दगोचरः ॥४॥
स्वबुद्धिप्रतिभासस्य संवित्तावपि जायते ।
बहिरर्थग्रहे मानस्तुल्यतैमिरबुद्धिवत् ॥५॥

एतदप्ययुक्तम्, क्वचिद् वक्तृविकल्पसदृशश्रोतृविकल्पा-

---

विकल्पान्तरस्यैकत्वाध्यवसायेनेत्यर्थ,। १. तत्किं तत्र रूपान्तरे शङ्काहि-कयासङ्केत· स्यादित्याह—याद्दशादित्यादि, विकल्पात्। २. श्रोतारमधिकृत्य ताद्दशस्यैव विकल्पस्य निमित्तं स्यात् शब्द । ३. यदाहि याद्दशाद्विकल्पाद्यः शब्द उत्पन्न· स ताद्दशमेवापरं विकल्पं जनयति तदा ते सद्दशा विकल्पा अनेके तस्यैकस्य शब्दस्याभिधेया इत्यायातमिति चेतसि निधायोक्तवान् **सङ्केतस्थितिरियमेव** ।४. अनन्तरश्लोकोक्तमेव द्रढयति-**किमेतादित्यादिना** । ५. बुद्धिसत्कं रूपमधिकृत्य किमेतदित्येवं सङ्केत्य· पुमान् इतरोऽपि सङ्केतक एवमित्यादि एतन्न विकल्पयति यावत्तावन्न समयोद्भवो न सङ्केतजन्म । यत एवं तेन कारणेन वक्तुः श्रोतुश्च द्वयोरपि समानाकारे बुद्धी एकगोचरे अपोहार्थापेक्षया । ६. परमार्थेन न कश्चिद्बाहिरर्थः शब्दगोचरोऽस्ति । ७. कथं बाह्योऽभिमानः ? इत्याह—स्वबुद्ध्याकारस्यापि संवित्तौ मया बाह्योऽर्थो गृहीत इत्यभिमानो भवति, तुल्यतैमिरिकबुद्धिवत् । तैमिरिको हि तैमिरिकस्य चन्द्रद्वयं प्रतिपादयति, स्वबुद्धिप्रतिभासं, इतरोऽपि स्वबुद्धिप्रतिभासमेव प्रतिपाद्यते । बाह्यस्य चन्द्रद्वयस्याभावादिति भावना नरे मन्दप्रज्ञ, विषमशास्त्रस्य श्रवणे हि न याद्दशो विकल्पो व्याख्यातुरस्ति शब्दात् ताद्दश· श्रोतुः सम्भवति तथोपलब्धे . अन्यथा श्रोतुस्तच्छास्त्रानवगमाभावाद्वक्तृविकल्पसद्दशविकल्पोत्पादेन, अनभ्युपगमे चानवगमाभावस्य प्रतीतिविरोध· । ८. क्वचिदनवगमप्रतीते·, क्वचिच्च सम्भवेऽपि वक्तृविकल्पसद्दशश्रोतृविकल्पस्य अयं श्रोतृविकल्पो वक्तृविकल्पसद्दश·, इति परिज्ञानाभावात् ।
×तदवगमसम्भवात् , असम्भवश्च परचेतसोऽप्रत्यक्षत्वात् ।

---

×अयं श्रोतृविकल्पो वक्तृविकल्पसदृश· ।

सम्भवाद्, एकान्तक्षणिकवादिनो अन्यजनकभावानुपपत्तेश्च; इति वक्ष्यामः।

एवमेकान्ताभिलाप्यत्वमनलाचलादिशब्दोच्चारणे वदनदाहपूरणादिप्रसङ्गान्नाङ्गीकर्तव्यम्। न चैवंवादिनः क्वचिदप्युपलभ्यन्ते, इति अतो नेह यत्नः, इति। तस्माद् व्यवहारान्यथानुपपत्तेरभिलाप्यानभिलाप्यमिति स्थितम्। न चात्र विरोधबाधा, अभिन्ननिमित्तत्वात्; तथाहि–अभिलाप्यैकधर्मकलापनिमित्तापेक्षया तदभिलाप्यम्, अनभिलाप्यधर्मकलापनिमित्तापेक्षया चानभिलाप्यम्, इति धर्मधर्मिणोश्च कथञ्चिद्भेदः, इति प्रतिपादितम्। ततश्च–यद्यत एवानभिलाप्यम् अभिलाप्यधर्मकलापनिमित्तापेक्षयैव अभिलाप्यत्वाद्, अभिलाप्यधर्माणां चानभिलाप्यधर्माविनाभूतत्वाद्; यत एव चानभिलाप्यम्, अत एव चाभिलाप्यम्, अनभिलाप्यधर्मकलापनिमित्तापेक्षयैव, अनभिलाप्यत्वाद्, अनभिलाप्यधर्माणां चाभिलाप्यधर्माविनाभूतत्वाद्, इति।

स्यादेतद्, यदि तदभिलाप्यानभिलाप्यधर्मकम्, एवं तर्हि अभिलाप्यानां शब्देनाभिधीयमानत्वात् किमित्यकृतसङ्केतस्य पुरोऽवस्थितेऽपि वाच्ये शब्दाच्च संप्रत्ययप्रवृत्ती भवतः? इति।

अत्रोच्यते, तज्ज्ञानावरणकर्मक्षयोपशमाभावात्, तस्य च सङ्केताभिव्यङ्ग्यत्वात्; तथाहि–ज्ञस्वभावस्यात्मनो मिथ्यात्वादिजनितज्ञानावरणादिकर्ममलपटलाच्छादितस्वरूपस्य सङ्केतनपठनश्रवणदानप्रतिपक्षभावनादिभिस्तदावरणकर्मक्षयोपशमक्षयाविर्भावापादितः ततो विवक्षितार्थाकारसंवेदनं प्रवर्तते, इति; अन्यथा,

१. एकान्ताभिलाप्यत्ववादिनः। २. इह चाभिलाप्यधर्मा अभिधेयपरिणामाः। ३. अतोऽन्ये सम्बन्धवशात् तथा नाभिधीयन्ते इत्यनभिलाप्याः। ४. सदाभिधेयपरिणामाना। ५. तथाविधस्वसंवेद्यानभिलाप्यधर्माविनाभूतत्वात्। ६. धर्माणाम्। ७. श्रोतुः। ८. तस्मिन्नकृतसंकेतवाच्ये। ९. क्षयोपशमस्य। १०. आदिपदादविरत्यादिग्रहः, मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः, इति वचनात्। ११. आदिपदाद् दर्शनावरणादिग्रहः। १२. आदिशब्द एतेषामेव स्वभेदप्रख्यापकः। १३. क्षयोपशमादेः

तत्प्रवृत्त्यभावात्। तत्प्रथमतयैव सर्वत्रादृष्टसङ्केतानामर्भकाणां सङ्केतस्य कर्तुमशक्यत्वात्। तथाहि—न शब्दादप्यसङ्केतितात्तदर्थे प्रतिपत्तिर्युज्यते, तत्सङ्केतकरणं च तत्राप्ययमेव वृत्तान्तः, इति, अनवस्थाप्रसङ्गः। क्वचिदवस्थाने चास्मन्मतानुवाद एव, नहि कथंचित्तात्त्वसम्बन्धाभावे सत्यवस्थानं प्रयुज्यते, इति।

स्यादेतद्, अर्भकोऽप्यसकृद् 'अयम्' इत्यादिशब्दसङ्केत्यार्थमभिधायुच्चार्यमाणमाकर्ण्य व्यवहर्तृंश्च तथा व्यवहारे प्रवर्तमानान् दृष्ट्वा प्रतिपद्यते शब्दार्थम्, इति; तथाहि—न मात्रादिभिरपि कस्यचित्सङ्केतः क्रि..., इति; दृश्यते च तत्प्रतिपत्तिः, इति।

अत्रोच्यते, दृश्यते खल्वियं प्रतिपत्तिः, किं तु ... पक्षे न युज्यते, असकृद्दर्शनपक्षेऽपि तत्प्रथमतया शब्दात् प्रतिपत्त्यभावाद्, भावे च कथंचित्तात्त्वसम्बन्धसिद्धेः अनादिसंसारपक्षेऽपि कथंचित्तात्त्वशब्दार्थसम्बन्धसिद्धेः, 'शब्दा हि विकल्पजन्मा' इत्यादिनिराकरणेन च सङ्केतस्य निषिद्धत्वात्, तथा प्रकरणादभिव्यक्तक्षयोपशमानां केषांचित्सङ्केतमन्तरेणैव शब्दार्थप्रतिपत्तिदर्शनात्। अलं प्रसङ्गेन।

इति अभिलाप्यानभिलाप्योभयरूपैकवस्तुवादः समाप्तः ॥४॥

---

१. अभावोऽपि कुत इत्याह। २. तज्जन्मापेक्षया। ३. सङ्केतशब्दाद्या। सकाशात्। ४. सङ्केतशब्दार्थे। ५. अयुक्ता च सङ्केतत्रय ... प्रसङ्गात् प्रसङ्गश्च सङ्केतितादपि सङ्केतशब्दात् तदर्थप्रतीति। ६. सङ्केतशब्दस्य। ७. अपरसङ्केतशब्दे। ८. यदुत तत्सङ्केतकरणमेव। ९. अन्ततो ... । १०. अनादिकालीन तत् प्रतीतावभ्युपगम्यमानायामित्यर्थः। ११. अयं घट इत्यादिरूपम्। १२. तदानयनादौ। १३. अयमित्यादिना ... पुरोऽवस्थितार्थरूपम्। १४. एतदेव भावयति तथा हीत्यादिना। १५. अर्भकस्य। १६. घटादि। १७. कालेन। १८. तज्जन्मापेक्षया। १९. प्रथमशब्दात्। २०. प्रतिपत्त्यभावश्चासङ्केतितत्वात् शब्दार्थयोः। २१. अनादित्वात् संसारस्यासकृच्छ्रुतत्वात् सर्वशब्दानां तत्र तत्र व्यवहारे आद्यशब्दश्रवणाद्वान्यप्रतीतिर्भविष्यतीति चेत्तन्नाद्यशब्दात् प्रतिपत्त्यभाव इत्यत्राह। एतदाशङ्क्याह—अनादि इति, अनादावपि संसारे तस्य विवक्षितस्यायमित्यादेः शब्दस्य पुरोऽवस्थितभाववाचकत्वेन श्रवणतद्वाच्यार्थप्रतीतिसिद्धेः इत्येवमनादिमान् वाच्यवाचकभावः शब्दार्थयोरिति। २२. ससङ्गे प्रस्तावात्।

( ५ )

यदप्युक्तम्-" विरोधिधर्माध्यासितस्वरूपत्वाद्वस्तुनोऽनेकान्तवादिनो मुक्त्यभावप्रसङ्गः " इति एतदपि सूक्ष्मेक्षिकया मुक्तिमार्गमनालोच्यैवोक्तम्, इति, उक्तवत्सत्त्वानित्यत्वादीनां विरोधित्वासिद्धेः, अन्यथा वस्त्वभावप्रसङ्गात् ॥

किं च-विरोधिधर्माध्यासितस्वरूपाभाव एव वस्तुन एकान्तवादिन एव मुक्त्यभावप्रसङ्गः तथाहि-यदि 'तदात्माङ्गनाभवनमणिकनकधनधान्यादिकमेकान्तेनैवानात्मादिकधर्मयुक्तं भावनालम्बनमिष्यते, हन्त ! तर्हि सर्वथाऽनात्मकत्वाद्भावकभाव्याभावात् तत्परिज्ञानोत्तरकालभाविभावनाऽभावतः कुतः? कस्य वा? मोहादिप्रहाणम्? इति कथ्यतामिदम् ॥

स्यादेतत्—परपरिकल्पिताऽविचलितैकस्वभावात्मापेक्षया तदनात्मकमभ्युपगम्यते, न पुनः प्रतिक्षणनश्वरात्मापेक्षया, इति ॥

एतदप्यसारम्, विकल्पानुपपत्तेः; तथाहि-तत्कथंचित्प्रतिक्षणनश्वरं स्यात्? सर्वथा वा?। यदि कथंचिद्, अर्हन्मतानुवाद एवः तथा चोक्तमर्हन्मतानुसारिभिः

सर्वव्यक्तिषु नियतं क्षणेऽन्यत्वमथ च न विशेषः।
सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थानात् ॥१॥" इति।

अथ सर्वथा, हन्त ! तर्ह्यैहिकामुष्मिकसकललोकसंव्यवहाराभावप्रसङ्गः तथाहि-प्रतिक्षणनिरन्वयेन नश्वरत्वे सत्यात्मादिवस्तुनः ग्राह्यग्राहकभावस्मरणप्रत्यभिज्ञानकुतूहलविरमणाद्याविच्छदङ्गनादिप्रतीतमपि नोपपद्येत, नहि ग्राह्यार्थतद्ग्राहकसंवेदनयोः कथंचिदपि तुल्यकालताऽभ्युपगम्यते परैः, तयोर्हेतुफलभावाभ्युपगमात्। उक्तं च—

१. अनेकान्तात्मकवस्त्वभाव इत्यर्थः। २. एकान्तेनैवात्मकत्वादिवस्तु। ३. अत्रैवमन्यथे। ४. वस्तु। ५. वस्तुपर्यायापेक्षया। ६. घटादयाम्। ७. क्षणसम्बन्धभेदात्। ८. तथात्मतादिरूपतया। ९. भावार्थमाह-**सत्योरिति,** चित्रसहकारिसामग्र्येन १०. संस्थानसत्त्व। ११. अननुवृत्तिनष्टानशीलत्वे सति। १२. धर्मकीर्तिना।

प्रत्यक्षताविदुर्हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ” इति ।

एवं च सति ग्राह्यार्थाभावे एव ग्राहकसंवेदनप्रसूतेः, तद्भावभावित्वात् संवेदनस्य, कुतस्तस्य तद्ग्राहकत्वम्? इतरस्य च तद्ग्राह्यत्वम्? इति; आदाय युक्तिप्रदीपं तिरस्कृत्य स्वदर्शनाभिनिवेशतिमिरं निभाल्यतामेतद्, इति ।

आकारार्पणक्षमत्वमपि तस्यानिश्चितमेव । नहि 'अनन्तरातीतविषयाकारमेवेदं संवेदनम्' इति विनिश्चेतुं शक्यते, तस्याग्रहणाद् । अग्रहणंच तदानीमसत्त्वाद् । असति च तस्मिंस्तदाकारमेतदतदाकारं न भवति, इति अवगमानुपपत्तिः ।

सविद्यमानादेव संवेदनाकारात् तदाकारत्वावगमः, इति चेत्? तथाहि-यद्यद्ग्राहकं न भवति, तत्तदाकारं न भवति, पीतग्राहकमिव नीलसंवेदनम्, तद्ग्राहकं चैतद्; इति कथं तदवगमानुपपत्तिः? इति ।

एतदप्ययुक्तम्-तत्प्रत्यक्षतानुपपत्तेरनुमीयमानत्वात् । न चानुमानताऽप्यत्र, एवंविधाविनाभावव्यवस्थाकारिणः क्षणद्वयग्राहिणो विज्ञानस्याभावाद्, अभावस्य क्षणिकत्वविरोधात् ।

तदेव विशिष्टं तद्व्यवस्थाकारि, इति चेत्? न, कारणविज्ञानबोधान्वयव्यतिरेकेण कार्यविज्ञानस्य वैशिष्ट्यायोगाद्, अतिप्रसङ्गात्, तद्वदपरस्यापि वैशिष्ट्यापत्तेः ॥

---

१. भिन्नकालं कथं ग्राह्यमिति चेत । २. अर्थस्य । ३. अनुमानविदः । ४. वस्तुस्थित्या । ५. किमित्यन आह । ६. ग्राह्यत्वेनाभिमतार्थ । ७. अर्थस्य । ८. तदुत्तरकालभाविसंवेदनग्राह्यत्वम् । ९. मूलमाभेगहस्तेन । १०. अर्थस्य । ११. अनन्तरातीतविषयस्य । १२. संवेदनकाले । १३. विषयस्य । १४. विषयाकारं । १५. अन्याकारं । १६. संवेदनगताकारात । १७. अनन्तरातीतविषयाकारत्वावगमः । १८. यथा नीलसवेदनं पीताकारं पीतग्राहकं । १९. अनन्तरातीतविषयाकारस्य । २०. विशिष्टग्राह्यग्राहकभावव्यवस्थेति ग्रन्थान्तरे । २१. अर्थसंवेदनयोः । २२. विज्ञानेभ्यः ।

---

* ज्ञानस्य, अविनाभाव ।

अन्यस्य च विरागमुक्तौ, इति, अशोभनमेतद्, अतिप्रसङ्गात्, एवमामुष्मिक व्यवहारोऽप्यसङ्गतः, इति स्थितम्।

स्यादेतद्-विशिष्टहेतुफलभावनिबन्धनः सर्व एवायमैहिकामुष्मिकव्यवहारः; तथाहि-विशिष्टं रूपादिसामग्रीं प्रतीत्य विशिष्टमेव संवेदनमुपजायते, ततश्च तदेव तस्य ग्राहकमभिधीयते, न पुनरन्यद्, अतिप्रसङ्गात्; एवं स्मरणाद्यपि भावनीयम् इति। कृतनाशाकृताभ्यागमप्रसङ्गोऽप्यत्रानवकाश एव, क्षणभेदेऽप्युपादानोपादेयभावेनैकस्यामेव सन्ततावाहितसामर्थ्यस्य कर्मणः फलदानात्, अतो य एव सन्तानः कर्त्ता, स एव भोक्ता, इति; तथाहि-यः कुशले प्रवर्त्तते, स अद्यपि तदैव सर्वथा विनश्यति, तथापि निरुद्ध्यमानः स्वानुरूपकार्योत्पादनसमर्थं सामर्थ्यं विज्ञानसन्ततौ आधाय निरुध्यते; यतः-सामर्थ्यविशेषादुत्तरोत्तरक्षणपरिणामेन कालान्तरपरिणामसञ्जातवासनापरिपाकात्, सहकारिप्रत्ययसमवधानोपनीतप्रबोधात्, फलमिष्टमनिष्टं चोपजायते; अतो न यथोक्तदोषः। प्रतीतश्चायमर्थः; तथाहि-रसायनादिभिः प्रथमोपनिपातवेलायामाहितो विशेषो देहे तदुत्तरोत्तरावस्थाभेदोपजननेन पश्चाद्दृहातिशयस्य बलमेधारोग्यादेर्निष्पादकः, तथा लाक्षारसनिषेकोपनीतसामर्थ्यं मातुलिङ्गकुसुममुत्तरोत्तरविशेषोपजननेन फलोदरान्तर्वर्तिनः केसरस्य रक्ततोहेतुर्भवत्येव; इति दृष्टत्वान्मुक्त्यतामभिनिवेशवैशसम्।

यच्चोक्तम्-" मुक्तिरपि प्राणिनामसङ्गता " इत्यादि-" याव-

---

१. सन्तानान्तरं सन्तानान्तरफलप्रसंगानात्वाविशेषात्। २. कारणकार्यभाव। ३. अक्षेपकार्यजननसमर्था। ४. उद्दिश्य। ५. संवेदनान्तरं। ६. सर्वस्य सर्वविन्यापत्ते। ७. तत्संस्कारानिबन्धनत्वेन। ८. विशिष्टकार्यकारणभावपक्षे। ९. हेतुफलभावेन। १०. प्रतीत्यभवनद्वारेण करणात्। ११. तदुक्तम्-" यस्मिन्नेव हि सन्ताने, आहिता कर्मवासना। फलं तत्रैव सन्धत्ते, कर्पासे रक्तता यथा॥ १॥" १२. सामान्येन। १३. प्रवृत्तिकाले। १४. विशिष्टवर्तात्योत्पादितः १५. आहितात्। १६. प्रशान्त""हितया। १७. ज्वरादिविघातबीजभूतः। १८. विशिष्टविशिष्टतरभेदत। १९. तत्सन्तान एव। २०. सिद्धनवादिना।

वयं च प्रतिक्षणनिरन्वयनश्वरत्वे सत्यात्मादिवस्तुनो न घटामुपैति ?" इति ।

तदप्ययुक्तम्, प्रतिक्षणनिरन्वयनश्वरात्मपक्ष एव युज्यमानत्वात्, तथाहि नैरात्म्यवादिनः क्षणिकाः पदार्थाः, यथा हेतुसन्निधानं विक्रियामात्मसात्कुर्वाणाः समुपरोधहेतुभिर्यदा पीड्यन्ते दुःखविशेषाध्यासितोत्तरोत्तरक्षणोत्पत्तितः, ततस्ते निर्विद्यन्ते, निर्विद्योत्तरोत्तरक्षणसमुत्पादानिर्विण्णास्ततुत्तरोत्तरश्रुतभावनादिना अक्लिष्टानेकक्षणपरम्परोत्पादनेन दानदमसंयमाद्यनेकप्रकारशुभधर्माभ्यासात्, रागादिबीजोन्मूलनसमर्थमार्गभावनातः प्रतिकलमवदायमानविशुद्धिपर्यन्तवर्तिक्षणोत्पादाधिगतविमुक्तयः कथ्यन्ते, इत्यनवद्यम्; अन्यथा, आत्मनो व्यवस्थितत्वाद्वेदनाभावेऽपि विकारान्तरभावात्, प्रतिपक्षाभ्यासेनाप्यनाधेयातिशयसम्भवाच्च मुक्त्यसम्भवः, इति ॥

एतदपि तत्त्वापरिज्ञानविजृम्भितमेव, भवत्पक्षेऽपि विशिष्टहेतुफलभावानुपपत्तेः; तथाहि–किं वैशिष्ट्यं नाम? किं हेतुफलयोरैक्यम्? तयोरेवैककालता? अथ कारणधर्मसंक्रान्तिः? उत साधारणवस्तुसम्बन्धित्वम्? किं चैकार्थक्रियाहेतुत्वम्? किं वा विशिष्टकारणजन्म? किं वा तदनन्तरभावित्वम्? किं वा विशिष्टक्रियाहेतुत्वम्?

किं चातः?

यदि हेतुफलयोरैक्यम्, तर्हि हेतुफलभावानुपपत्तिरेव, सर्वथैकत्वान्मृत्पिण्डत्वादीनामपि घटपटाद्यभेदतो जलाद्यानयनादिकार्यप्रसाधकत्वप्रसङ्गात्, घटादीनामपि वाऽप्रसङ्गात् ।

---

१. मुक्तेः । २. मते । ३. ज्वरादिभिः । ४. प्रबन्धेन निवृत्ताः सन्तः । ५. नैरात्म्य । ६. विशुद्ध्यमानाश्च ते विशुद्धिपर्यन्तवर्तिक्षणोत्पादाधिगतविमुक्तयश्चेति समासः । ७. एवमनभ्युपगमे । ८. अप्रच्युतानुत्पन्नस्थिरैकस्वभावतया । ९. वेदनायाः, इति शेषः । १०. शास्त्रावाहितेन । ११. जलाद्यानयनादिकार्यस्याप्रसक्तेः, घटादीनां मृदाद्यभेदात्, मृदादिषु जलाद्यानयनादिकार्यस्याभावात् ।

फलभावानुपपत्तेः फलस्य[1]ैवार्थक्रियारूपत्वात्, यथोक्तम्—"भूतिर्येषां क्रियासैव" इत्यादि।

अथ विशिष्टकारणजन्म, तदप्यसाधु, कारणवैशिष्ट्यानुपपत्तेः, तथाहि—तत्[2]प्रत्ययान्तर[3]सम्पातात् प्रतिकलमाहितातिशयं सत्तन्निर्वर्त्त्य[4]द्विशिष्टमुच्यते; इति। एतच्चायुक्तम्, प्रत्ययान्तरसम्पातेऽप्यतिशयायोगात्; तथाहि—स तस्य[5]ातिशयः प्रत्ययान्तरसम्पातजन्मानुत्पन्नस्य वा स्यात्? उत्पद्यमानस्य वा? उत्पन्नस्य वा? निवर्त्तमानस्य वा? निवृत्तस्य वा? इति विकल्पाः। न तावदनुत्पन्नस्य, तस्यैवासत्त्वात्। नाप्युत्पद्यमानस्य उत्पद्यमानावस्थानाभ्युपगमात्। नाप्युत्पन्नस्य, अनाधेयातिशयत्वात्, अतिशयाधाने च तदन्[6]यत्वप्रसङ्गात्। नापि निवर्त्तमानस्य निवर्त्तमानावस्थानाभ्युपगमात्। नापि निवृत्तस्य, तस्यैवाविद्यमानत्वात्।

स्यादेतत्,—न ह्येक[7]क्षणमङ्गीकृत्यातिशयचिन्ता।

किन्तर्हि?

प्रबन्धम्; तथा चोक्तम्—

"उपकारी विरोधी च सहकारी च यो मतः
प्रबन्धापेक्षया सर्वे नैककाले कथञ्चन॥ १॥"

तत्र व्यस्ता[8] उपादानसहकारिप्रत्ययाः समस्तान्[9] स्वानुरूपकार्योपजनन[10]योग्यान् जनयन्ति, समस्ताश्च[11] तदुपा[12]हितातिशा-

---

१. तथा फलमेवार्थक्रियाऽभ्युपगम्यते। ततश्च हेतोरर्थक्रियाफलमेव। फलस्य चान्यया कयाऽप्यर्थक्रियया भाव्यमिति कथं हेतुफलयोरेकार्थक्रियाहेतुत्वम्। २. बीजादि। ३. क्षित्यादिसहकारिण। ४. अङ्कुरादिकार्यम्। ५. बीजादेः कारणस्य। ६. सोऽतिशयः कारणाद्भिन्नः प्रसज्यते। ७. एकैकशः। ८. बीजक्षित्यादयः। ९. यदा जलार्द्रायां पृथ्व्यां बीजमुप्तं तदा बीजमपि क्षित्यादीन् सर्वान् जनयति। क्षितिरपि क्षितिबीजादीन् सर्वान्। एवमन्येऽपि। १०. स्वनिष्पाद्याङ्कुरादिकार्यजननसमर्थान् क्षणान्। ११. एकैकशो बीजक्षित्यादिसमस्तजननस्वभावा बीजादयः। १२. आत्मना आत्मना सह जातैः क्षित्यादिभिः।

रूपाः सामर्थ्यप्रकर्षवता रूपभेदेनानुगतानन्त्यात् कालोपाधि-
प्रकर्षप्रापितरूपभेदात्, तेऽप्यनन्त्यात्मानया, इति क्रमेणोत्तरो-
त्तरप्रसवपरम्परायं विवक्षितफलापेक्षया चरमक्षणकालभाविनो
भावाः परतस्तमतिशयमासादयन्ति, यतः कार्यजन्मेति तदेव
वैशिष्ट्यमिष्यते, इति ।

एतदप्ययुक्तम्, विहितोत्तरत्वात्. नहि व्यस्तानामपि
कारणे विशेषाधानमन्तरेण समस्तलक्षणकार्यविशेषो युज्यते,
अतिप्रसङ्गात्। विशेषाधानस्य चैकक्षणमधिकृत्य निराकृतत्वात्,
प्रबन्धचिन्तायामपि तुल्यत्वात्, क्षणव्यतिरेकेण प्रबन्धायोगात्,
उक्तञ्च—

" विशेषहेतवस्तेषां प्रत्यया न कथञ्चन ।
नित्यानामिव युज्यन्ते क्षणानामविशेषतः ॥ १ ॥" इत्यादि

अथ तदनन्तरभावित्वम्, तदप्ययुक्तम्, अतिप्रसङ्गात्,
तस्य हि तत्कालोपजातसकलपदार्थेष्वविशिष्टत्वात्, तथा च-

" तदनन्तरभावित्वात् तत्फलत्वं प्रसज्यते ।
विश्वस्य कारणं तद्धि न चेत् सर्वस्य सम्मतम् ॥१॥"

---

१. यदा हि समस्ता अन्यान समस्तान् जनयन्ति तदाऽन्योपां सहोत्पन्ने क्षित्यादिभिरतिशय स्यात यदा तु तेऽन्येऽपि समस्ता अपरान समस्तान जनयन्ति, तदा तेऽन्ये समस्ता अन्यूनातिरिक्तकारणत्वात, कथमपरसमस्तेष्वतिशयमादधतीत्याह—कालेति, काललक्षणो योऽसौ उपाधिर्विशेषस्तेन कृत्वाऽन्ये समस्ते प्रापितो रूपभेदो येषामसमस्तानां तान । २. किञ्चिदधिकामित्यर्थः । ३. व्यस्ता हि समस्ता लक्षणं विशिष्टं कार्यं तदा जनयन्ति, यदि तेषु कोऽपि विशेषः स्यात। विशेषोऽपि व्यस्तेषु तदैव स्याद् यदि तेषां कारणेऽपि विशेषाधानं स्यात्। ४. जन्म यदि कारणे विशेषमन्तरेणैव कार्यविशेषस्तदा कुशूलस्थापि बीजस्याङ्कुरोत्पत्ति स्यात्। ५. क्षणे एव प्रतिबन्ध इत्यभ्युपगमात्। ६. अव्यतिरेकात्, ७. सकलानामपि पदार्थानां फलत्वप्रसङ्ग । ८. तस्य विवक्षितकारणस्य मृदादे । ९. विवक्षितं मृदादि ।

विशिष्टकार्यजननस्वभावं हीष्यते यतः ।
मुक्त्वोपलम्भं कार्यस्य कारणानन्तरं कथम् ॥ २ ॥
गम्यते तत्स्वभावत्वं स च तुल्यः फलान्तरे ।
तत्रैव तस्य व्यापार, इति चेत् तन्न युज्यते ॥३॥
क्षणभङ्गसमुच्छेदाद् व्यापारो नासतो यतः ।
उत्पत्तिव्यतिरेकेण व्यापारो नेष्यते इति चेत्? ॥४॥
व्यापारकालभावित्वात् कारणाभिन्नकालता ।
फलस्यापि च सत्येवं कार्यकारणता कुतः ॥५॥"

न चापि विशिष्टक्रियाहेतुत्वम्, इत्यतिव्याप्तेस्तस्य सर्वस्य समानत्वात्; सर्व एव हि पदार्था विशिष्टक्रियाहेतवः। इत्यलं प्रसङ्गेन ।

तदेवं वैशिष्ट्याभावाद्धेतुफलभावानुपपत्तिः, इति स्थितम् ।

'असति चास्मिन् विशिष्टां कर्त्रादिसामग्रीं प्रतीत्य विशिष्टमेव संवेदनमुपजायते' इत्यादि यदुक्तम्, तत्सर्वमपाकृतमेवावगन्तव्यम्; तथाप्यत्यन्तमवगणय्याऽनुभवभावितमेव विद्वज्जनोपहास्यं मुग्धजनविभ्रमकरं यदुक्तम्–"क्षणभेदेऽप्युपादानोपादेयभावेनैकस्यामेव सन्ततावाहितसामर्थ्यस्य कर्मणः फल-

१. किमिति तत्कारणं सत्यस्य न सम्मतमित्याह–विशिष्टेति । २. मृदादेर्घटादिजननस्वभावत्वं तदैवावगम्यते यदि मृदादेरनन्तरं घटादेरुपलम्भः स्यात् स चोपलम्भः फलान्तरे पटादावपि तुल्यः, मृदोऽनन्तरं पटस्याप्युपलभ्यमानत्वात् । ३. कारणानन्तरं कार्यस्योपलम्भ इति कारणस्य विशिष्टकार्यजननस्वभावत्वं नाभ्युपगम्यते, किन्तु तस्य कारणस्य तत्रैव विशिष्टे कार्ये व्यापार इति कारणस्य तत्स्वभावत्वाभ्युपगम इति चेत् । ४. क्षणनश्वरत्वे निरन्वयोच्छेदात् । ५. कारणस्य । ६. कार्यस्योत्पत्तिरेव कारणस्य कार्ये व्यापार इति चेत् । ७. नहि कारणमन्तरेणोत्पत्तिलक्षणो व्यापारो भवतीत्यर्थः । ततश्च कारणफले अभिन्नकाले प्राप्ते । ८. अथाष्टमं मौलं विकल्पमाह । ९. अत्र सर्वेऽपि पदार्था मिथो हेतुफलतां प्राप्नुयुः । १०. प्राच्यं युक्तियुक्तं यदुक्तम् ।

दानात्" इत्यादि; तथा 'यः कुशले प्रवर्तते, स यद्यपि तत्रैव सर्वथा विनश्यति, तथापि निरुध्यमानः स्वानुरूपकार्योत्पादनसमर्थं सामर्थ्यं विज्ञानसन्ततावाधाय निरुध्यते' इत्यादि च।

अत्र विशेषत उच्यते-सर्वमिदमयुक्तम्, सामर्थ्याधानस्यासिद्धत्वात्; तथाहि-किमिदं सामर्थ्यं नाम? किमुत्तरः कार्यभाव एव? उत तद्गतकार्यान्तरनिर्वर्त्तनसमर्थः शक्तिविशेषः? आहोस्विद्वासना? इति; यदि-'उत्तरः कार्यभाव एव तमाधाय निरुध्यते' इत्यभ्युपगम्यते, हन्त! तर्हि क्षणिकत्वविरोधः, नह्यनुत्पन्नो विरुद्धो वाऽसौ तदाधानकर्तृत्वे प्रभुः, उदयकालाधानाभ्युपगमे च द्वयोरपि तुल्यकालप्रसङ्गः। अथ तद्गतः कार्यान्तरनिर्वर्त्तनसमर्थः शक्तिविशेषस्तमाधाय निरुध्यते, सर्व पूर्वोक्तदोषः, तस्य कार्यव्यतिरेकेणानभ्युपगमात्, तदात्मलाभकाल एव चोत्तरकालभाविनोऽपि तन्निवर्त्यस्य कार्यान्तरस्य भवनप्रसङ्गः, तद्भावमात्रापेक्षित्वात्, इतरस्यापि भावमात्रेणैव जनकत्वात्, अनन्तरभवने वा तन्निर्वर्त्यापत्तेरतिप्रसङ्गात्।

---

१. सामर्थ्यं। २. कार्यभावं। ३. कुशल। ४. उत्तरकार्यगत।
५. तस्मादुत्पन्नोऽविनष्टश्चोत्तरं कार्यं जनयतीति प्रसङ्गः। एवं च क्षणिकत्वं कुशलकारिणो द्वितीयक्षणेऽप्यवस्थानप्रसङ्गे। ६. अथ कुशलकारी कुशलकारणक्षण एवोत्तरकार्यं जनयतीत्यभ्युपगम्यते तदा कार्यकारणयोरेककालताप्रसङ्गः। ७. दूषणान्तरमाह-तदित्यादि तस्याहितविशेषस्य कार्यस्य य आत्मकालस्तस्मिन्नेव तन्निष्पाद्यमग्रेतनकार्यभाविकार्यान्तरमपि प्राप्नोति। एवं तस्मादप्यग्रेतनं यावत्तदेव सुखदुःखोपभोगप्राप्तिरित्यर्थः। ८. कार्यान्तरस्य। ९. यतस्तस्य कार्यस्याहितविशेषस्य यद्भावमात्रं तदेवापेक्षते कार्यान्तरम्, नान्यत्किञ्चित्कारणान्तरं, तद्भावस्य समर्थस्यैवोत्पन्नत्वात्। १०. आहितविशेषस्य कार्यस्यापि। ११. न करणान्तरापेक्षया। १२. अथाहितविशेषस्य कार्यस्यानन्तरं तस्मिन् विनष्टे कार्यान्तरं भवतीत्यभ्युपगम्यते प्राच्यदोषपरिहाराय, तदा तेन समर्थेन कार्येणानन्तरभूतेन यन्निर्वर्त्यं कार्यान्तरं तस्यापत्तेरतिप्रसङ्गात्, इदमुक्तं स्यात्-यथा तदनन्तरभाविस्वसन्ताने निर्वर्त्यं कार्यान्तरमेवमन्यसन्तानेऽपि तदनन्तरभाविसर्वकार्यान्तरं तन्निवर्त्यं प्रसजतीत्यर्थः। १३. कुशलकारीक्षण।

अथवा, स नामाधाय निरुध्यते ? इति, एतदप्ययुक्तम् वास्यवासकयोर्युगपदभावात्[1] । किञ्च—

" वासकाद् वासना भिन्ना, अभिन्ना वा भवेद् यदि ।
भिन्ना स्वयं तया[2] शून्यो[3] नैवान्यं वासयत्ययम्[4] ॥१॥"

अथाभिन्ना न सङ्क्रान्तिस्तस्या[5] वासकरूपवत्[6] ।
वास्ये सत्यां च संसिद्धिर्द्रव्यांशस्य प्रसज्यते ॥ २ ॥

असत्यामपि सङ्क्रान्तौ, वासयत्येव चेन्ननु ।
अतिप्रसङ्गः[7] स्यादेवं, कल्पिता चेत् तयाऽपि[8] किम् ॥३॥

एतेन, यस्मिन्नेव सन्ताने आहिता कर्मवासना[10] ।
फलं तत्रैव सन्ताने कर्पासे रक्तता यथा ॥ ४ ॥

इत्याद्यपि निरस्तमवगन्तव्यम् ।

यच्चोक्तम्-'अन्यथात्मनो ऽनवस्थितत्वाद् वेदनाभावाद् भावेऽपि विकारान्तराभावात् प्रतिपक्षाभ्यासेनाप्यनाधेयातिशयत्वाच्च मुक्त्यसम्भवः' इत्येतदपि न नः क्षतिमावहति, अनभ्युपगमात् नह्येकान्तनित्यमस्माभिरात्मादिवस्त्विष्यते ।

किन्तर्हि ? कथञ्चिद्, यथा वस्तु[11] नित्यानित्यता सदसद्रूपता च, तथोक्तमेव-नित्यानित्यादिधर्मवत्येव[12] च ग्राह्यग्राहकभावस्वकृतकर्मफलोपभोगसम्यग्ज्ञानभावनादयो युज्यन्ते, कथञ्चिदवस्थितत्वाद्[13], अनुभवसिद्धत्वाद्, न चानुभवसिद्धं वस्तुनः

---

१. यदि हि वास्यो वासकश्च युगपत्स्याताम्, तदा वासको वास्ये वासनामाधाय निरुध्यते, इत्येतद् घटते । न च वास्यवासकज्ञानक्षणयोर्युगपदभ्युपगम्यते बौद्धैः । २. वासनया । ३. वास्यं । ४. वासको ज्ञानक्षणः । ५. वासनायाः । ६. यथा वासकस्य स्वरूपमभिन्नं सद्वासकाद् वास्येन । सङ्क्रमति । एवं वासनाऽपि वासकादभिन्ना वास्येन संक्रामेत । ७. सन्तानान्तरवर्त्तिनामपि ज्ञानक्षणानां वासनाप्रसक्तेः । ८. अथ वासना कल्पिता तया सह भेदाभेदविकल्पावनुपपन्नाविति चेत् । ९. कल्पितया वासनया किञ्चिदसत्त्वात् । १०. कर्म । ११. वस्तुनः । १२. वस्तुनि । १३. कथञ्चिदवस्थितत्वं च तस्यैव ग्राह्यादेस्तथैव वृत्तेर्निर्विशिष्टग्राह्यादि ।

सदसद्रूपादित्वे विरोधिधर्माध्यासितस्वरूपाभिधानं न्याय्यम्। अतथा भावे तदभावप्रसङ्गतो विरोधासिद्धेः, इत्युक्तं प्राक्। न च परैरपि[4] स्वलक्षणेषु साधारणप्रमेयता[6] भ्रान्तौ चाभ्रान्ता स्वसंविन्नष्यते, तेषां स्वलक्षणादीनां प्रमेयतादिभावापत्तेः, इति। न विपश्चितस्तथा विरोधाभिधानं वैपश्चित्यविरोधि, तत्तथाऽभावे सकलव्यवहाराभावप्रसङ्गात्[10]। अप्रमेयत्वेन[11] स्वलक्षणेषु प्रमाणाप्रवृत्तेः। भ्रान्तौ[12] च स्वसंविदभावप्रसङ्गात्, न चैतदात्माङ्गनाभवनाद्यनात्मकमनित्यमशुचिदुःखमेव, अन्वयस्यैवात्मत्वात्, तस्य च व्यवस्थापितत्वात्। एवं नानित्यमेव, तदतावस्थ्यात्। अन्यथा, तदनुपपत्तेः[13]। नाशुच्येव, शुभपरिणामभावात्, लोके जलेन शुचिकरणेन तथोपलब्धेः। एवं न दुःखमेव, मुक्तिसुखजनकत्वात्, पारम्पर्येण तत्स्वभावत्वात्[14], इति।

किञ्च-अनात्मकं शून्यमित्येकोऽर्थः[15], अनित्यमस्थिरं सविति च। ततश्च यद्यनात्मकम्, कथमनित्यम्? अथानित्यम्, कथमनात्मकम्? इति। कथं च बुद्धधर्मसङ्घलक्षणे परमनिर्वृतिहेतौ निर्दोषे महारत्नत्रये सति इदं वक्तुमुचितम्? यदुत सर्वमेवाशुचि, सर्वमेव दुःखम्, इति; तदाशातनापत्तेरसदभिधानात्[16]। अन्यथा, रत्नत्रयायोगः, तदन्यैः[17] शुच्याद्यविशेषात्; योगे[18] वातिप्रसङ्गः।

एवं च, 'तथा ह्येते तदात्माङ्गना भवनमणिकनक' इत्यादि श्लेष इति कृत्वेत्यन्तं यदुक्तम्, तत्परपक्षे उक्तिमात्रमेव, उक्त-

१. प्राग वर्त्तनात। २. सदसद्रूपाभावे। ३. परन्तु। ४. बौद्धैः। ५. स्वलक्षणेषु वस्तुषु। ६. सामान्य। ७. विरोधिधर्माभिधानं। ८. विरोधि। ९. तेषां स्वलक्षणादीनां साधारणप्रमेयतादिरूपेणाभावे। १०. व्यवहाराभावमेव दर्शयति। ११. साधारणप्रमेयताभावे। १२. विकल्पात्मकायाम्। १३. तुच्छस्वभावेन तादवस्थ्यानुपपत्तेः। १४. मुक्तिसुखजनकत्वात्। १५. पर्यायशब्दा खल्वेते इत्यर्थः। १६. असद्रत्नत्रयस्याशुच्यादि इत्थं चैतद्दर्शनकर्त्तॄणाम्। अन्यथा तद्रत्नत्रयमेव न स्यात्। १७. तस्माद्रत्नत्रयादन्ये ये शुच्यादयः। आदिपदात् दुःखप्रदानेन सह विशेषः स्याद्रत्नत्रयस्य। १८. अशुच्यादाविशेषेऽपि रत्नत्रययोगे। १९. [illegible]।

वन्निर्विषयत्वात्, अतो विरोधिधर्माध्यासितस्वरूप एव वस्तुन्यनेकान्तवादिन एव सकलव्यवहारसिद्धिः। पीडानिर्वेदादीनां च कथञ्चिदेकाधिकरणत्वान्मुक्तिसिद्धिश्च नान्यस्य।

तस्माद् व्यवस्थितमेतद्-एकान्तवादिन एव मुक्त्यभावप्रसङ्गः, इति।

स्यादेतद्-विरोधिधर्माध्यासितस्वरूपत्वे सति वस्तुन एवाभावात् तन्निबन्धनव्यवहाराभावः, न हि शीतोष्णस्पर्शवदेकमस्ति, तयोर्विरोधात्, इति।

अत्रोच्यते-अथ कोऽयं विरोधः? अन्यतरभावेऽन्यतराभावः, इति चेत्? अस्त्वेतत्, किन्तु-शीतोष्णस्पर्शयोर्यो विरोधः, स किं स्वरूपसद्भाव कृत एव? उतैककालासम्भवात्? आहोश्विदेकद्रव्यायोगेन? किमेककालैकद्रव्याभावतः? उतैककालैकद्रव्यैकप्रदेशासम्भवेन? आहोश्विदभिन्ननिमित्तत्वेनेति?

किञ्चातः?

न तावत्स्वरूपसद्भावकृत एव शीतोष्णस्पर्शयोर्विरोधः, नहि शीतस्पर्शोऽनपेक्षितान्यनिमित्तः स्वात्मसद्भाव एवोष्णस्पर्शेन सह विरुध्यते, उष्णस्पर्शो वेतरेण; अन्यथा, त्रैलोक्येऽपि शीतोष्णस्पर्शयोरभाव एव स्यात्। एकस्य वा कस्यचिदवस्थानान्यतरस्य, न चानयोर्जगति कदाचिदप्यसत्ता, सदैव वडवानलतुहिनसद्भावात्। सद्भावश्चाविद्वदङ्गनाद्यविप्रतिपत्तेः, इति। न चैककालासम्भवाद्, यत एकस्मिन्नपि काले तयोः सद्भाव उपलभ्यत एव, यथा-शीता आपः, पर्वते निकुञ्जप्रस्रवणानि वा, उष्णस्त्वग्निः; न च विरोधः, न चैकद्रव्यायोगेन, यत-एकेनापि द्रव्येण तयोर्योगो भवत्येव; तथा च शीतकाले रात्रौ निरावरणे देशे पर्युषिते लोहभाजने शीतस्पर्शो भवति, तत्रैव मध्याह्ने दिनकरप्रतप्ते उष्णः, इति न च विरोधः, न

---

१. युक्तं एकं किञ्चिद् वस्त्विति। २. व्यापारे। ३. एककालत्वादि। ४. अन्योऽन्यस्य बाधनेन। ५. यद्वा शीतोष्णस्पर्शयोर्मध्ये एकस्य कस्याप्यवस्थानं स्यादन्यतरस्य [illegible] नेत्यर्थः। ६. निर्झराणि।

चैककालिकद्रव्याभावतो विरोधः; यतः-एकस्मिन्नेव काले एकस्मिंश्च द्रव्येऽनयोरभाव एव; तथाहि—धूपकडुच्छकस्थालकेऽग्निसम्बन्धे उष्णस्पर्शो भवति, तस्यैव तु गण्डे शीतः, इति; न च विरोधः, एककालिकद्रव्यैकप्रदेशासम्भवविरोधस्त्विष्ट एव, एकप्रदेशस्यापरदेशाभावेनावयवावयविभेदानुपपत्तेर्भिन्नधर्मत्वात्। भिन्नधर्मयोश्चैकत्वं विरुद्धमेव, अन्यथा तद्भेदाभावप्रसङ्गात्। न चैवं सदसन्नित्यानित्यादिभेदानां भिन्नधर्मत्वम् एकत्रैव भावात्, भावस्य च 'स्वद्रव्यक्षेत्रकालभावरूपेण सत्, परद्रव्यक्षेत्रकालभावरूपेण चासत्' इत्यादिना प्रतिपादितत्वात्। ततश्च नासम्भवभाविना विरोधेन नियमभाविनामपि विरोधकल्पना न्याय्या, अतिप्रसङ्गात्। नहि श्रावणत्वं विरुद्धमपि घटादिसत्त्वेन नासत्तया विरुद्धत्वेन, तथोपलम्भात्, 'अनुभवप्रमाणकाश्च सन्तोऽर्थाधिगमे' इति, अन्यथा, तदभावप्रसङ्गात्। अभिन्ननिमित्तत्वेनापि विरोधः सिद्ध एव। नहि यदेव शीतस्पर्शस्य निमित्तं तदेवोष्णस्पर्शस्य, भेदाभावात्, तत्सङ्करादिप्रसङ्गाच्च। न च सदसदादिधर्माणामभिन्ननिमित्तता, निमित्तभेदाभ्युपगमात्। न चैकस्मिन्निमित्तभेदो न युक्तः,

१. [illegible]। २. एकस्मिन् काले एकस्मिन् द्रव्ये एकस्मिन् प्रदेशेऽसम्भवलक्षणो विरोध, भिन्नधर्मत्वाद्भेदाभ्युपगमश्च परिहार्य । ३. शीतोष्णस्पर्शयोरभ्युपगम्यत इत्यर्थः । ४. शीतोष्णस्पर्शयोः । ५. तयोर्धर्मयोर्भेद । ६. यथा शीतोष्णस्पर्शयोरेकत्वम् । ७. विरोधो हि असम्भवेन सति भवति, नियमभाविना च को नाम सम्भवः ? । ८. श्रावणत्वं हि घटादिसत्त्वेन सह विरुद्धमपि सत् घटादिः श्रावणो नाम । परसत्त्वेनापि सहानवस्थानम् अपि तु विरुद्धमेव, अन्यथा श्रावणत्वप्रसङ्गमेव स्यात् । ततो यदि श्रावणत्वं घटादिसत्त्वेन सह विरुद्धं कथं तदसत्त्वेनापि सह विरुद्धं ? असत्त्वेन सह विरुद्धं कथं नाम घटादिसत्त्वेनापि विरुद्धं ? सत्त्वेनासत्त्वेन च सहैकस्य विरोधो विरुद्ध इत्येवं यथा नात्र विरोधकल्पना तथा ह्यनेन सम्भवाभावात्, एवं न सदा तदात्मके वस्तुनि विरोधकल्पना न्याय्येति भाव । ९. यद्यनुभवप्रमाणका सन्तो न भवन्ति तदा ते सन्त एव न स्युरित्यर्थः । १०. शब्द एव । ११. यदि हि शीतोष्णस्पर्शयोरेकत्वमेव स्यात् तदेतयोर्भेदो न स्यादित्यर्थः । १२. शीतोष्णस्पर्शयोः स्वद्रव्यादिरूपेण सत् परद्रव्यादिरूपेण चासदित्युक्तम् ।

[illegible] धर्मिणोश्च भेदाभे-

[illegible] ण ।

[illegible] वन्तरापत्तिलक्षणो विरोधः

[illegible] वत्, शीतोष्णवत् सुखदुःखवद् वा,

[illegible] । कुतोऽसमानत्वात्, नहि छायातपादिवत्प्रतिनियततया इतरेतरानुविद्धाः सदसदादयः, तद्वत्केवलानुपलम्भात्, तथा स्वभावत्वात्, तथानुभवसिद्धेः, इति । छाया आतपानुविद्धा न भवति, इति विरोधकल्पनायामपि कः प्रसङ्गः सदसदादिषु? नहि 'अणुश्चेतनः' इति ज्ञानेऽपि तद्वत्तद्विरोधाभिधानं युक्तम्, तत्स्वभावभेदोपपत्तेः ।

यच्चोक्तम्-"आत्मात्मीयदर्शनमेव मोहः" इत्यादि, अत्राभिष्वङ्गपूर्वकं सर्वथा स्थैर्यवासनागर्भमात्मात्मीयदर्शनमेव मोहः, इतीष्यत एव, नैरात्म्यैकान्तवादिनस्त्विदमनुपपन्नम्, दर्शनायोगात्; दर्शनायोगस्य च प्रतिपादितत्वात्, अत एव रागद्वेषाभावः । इत्यलं विस्तरेण ॥ ५ ॥

इतिमोक्षवादः ॥ ५ ॥

## ॥ समाप्तमिदमनेकान्तवादप्रवेशकाख्यं प्रकरणम् ॥

॥ ग्रन्थाग्रं ७२० ॥

॥ कृतिरियं सिताम्बराचार्यश्रीहरिभद्रसूरीणाम् ॥

---

१. वस्तुनोऽनेकत्वाभ्युपगमे वस्तुनो वस्त्वन्तरापत्तिर्विरोध । २. सदसदादयो नहि छायातपादिवत् । न छाया नातपादिसदृशा । ३. यतः सत्त्वं विना न असत्त्वम्, असत्त्वं च सत्त्वं विना नेति नियमेन मिथोऽनुविद्धाः । ४. चेतनत्वविरोधाभिधानं । ५. तयोरणुज्ञानयोः । ६. आश्रयणा वासना ।

॥ इति श्रीमदनेकान्तमतप्रवेशप्रकरणावचूरिः ॥